॥ श्रीः ॥

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति [illegible] ।

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

## उपोद्घातः ।

---

सव्याख्यैषा **साम्बपञ्चाशिका** कोऽप्यादित्यस्तुतिग्रन्थः ।

"परमादित्यमाद्यं प्रपद्ये" (श्लो० ३)

"भवतु परमादित्यमूर्त्तिः प्रसन्ना" (श्लो० ६)

"तस्मै तस्मै भवतु परमादित्य! नित्यं नमस्ते" (श्लो० १२)

इत्यादीभिरनेकत्र परमादित्यरूपेण स्तवनीयदेवतायाः कीर्तनादस्य ग्रन्थस्य **परमादित्यस्तुतिः**,

"नमस्तस्मै परब्रह्मणे" (श्लो० १)

इत्युपक्रमे परब्रह्माभिन्नतया आराध्यां देवतामुपस्थाप्योपसंहारे

"गच्छेयं त्वां सुरपितृगती चान्तरा ब्रह्मभूतः" (श्लो० ५०)

इत्याराधकस्य भक्त्योपास्तिमहिम्ना तदभिन्नब्रह्मभूतत्वकथनाद् **ब्रह्मादित्यस्तुतिरि**ति चोभयथा युक्तरूपं नामधेयं धरन्ति भक्ताः ।

इयं स्तुतिः,

"सर्वात्मत्वं सवितुरिति यो वाङ्मनःकायबुद्ध्या
रागद्वेषोपरमसमतायोगमेवारुरुक्षुः ।
धर्माधर्मग्रथनरशनामुक्तये युक्तियुक्तां
स **श्रीसाम्बः** स्तुतिमिति रवेः सुप्रतिष्ठां चकार ॥

(श्लो० ५२)

इति श्लोकानुसारतः श्रीसाम्बकविविरचितेति सुस्पष्टमवगम्यते । सोऽयं कविर्भगवतः **श्रीकृष्णस्य** पुत्र एव वा सुप्रसिद्धः उताहो अन्य इति विचारः प्राप्तावसरः ।

**राजानकश्रीक्षेमराजकृ**तायां टीकायां **निर्णयसागरमुद्रणालयप्रसिद्धीकृ**तायामादिमश्लोकावतारिकासन्दर्भे

"**श्रीवासुदेवस्य** भगवतः पुत्रः **श्रीसाम्बः** स्वात्मविवस्वत्स्तुतिं जगतोऽनुग्रहाय वक्तुमुपक्रमते"

इति,

"भक्तिश्रद्धाद्यखिलतरुणीवल्लभेनेदमुक्तं
श्रीसाम्बेन प्रकटगहनं स्तोत्रमध्यात्मगर्भम् ।
यः सावित्रं पठति नियतं स्वात्मवत् सर्वलोकान्
पश्यन् सोऽन्ते व्रजति शुकवन्मण्डलं चण्डरश्मेः ॥
(श्लो० ५१)

इति फलश्रुतिनिगमनश्लोकव्याख्यानावसाने —

"कीदृशेन साम्बेन ! भक्तिश्रद्धे आदी यासां तत्त्वार्थचिन्तादीनां ता एवाखिलास्तरुण्यो नवनवाः सुन्दर्यस्तासां वल्लभेन क्षणमपि परिहर्तुमशक्येन प्रेयसा, नतु रूपलावण्यातिशयमात्रात् समस्तबाह्यरमणीस्पृहणीयेन, इत्यनेन व्यतिरेकलभ्येनार्थेन भगवद्वासुदेवसुतत्वमात्मनः प्रकटयति"

इति च दर्शनाद् भगवतः श्रीकृष्णस्य पुत्र एवायं साम्बकविरिति प्रतिपाद्यते। यद्येवम्, अस्यादित्यभक्तस्य महाकवेरतिप्राचीनतादि पुराणकथापात्रतयैव स्वयं सिध्यतीति कृतमेनन जीवितसमयादिनिर्धारणक्लेशेन ॥

वराहपुराणे एकसप्तत्युत्तरशततमेऽध्याये —

"ततः साम्बो महाबाहुः कृष्णाज्ञप्तो ययौ पुरीम् ।
मथुरां मुक्तिफलदां रवेराराधनोत्सुकः ॥
नारदोक्तेन विधिना साम्बो जाम्बवतीसुतः ।
षट्सूर्यात् पूजयामास उदयन्तं दिवाकरम् ॥
कृत्वा योगेन चात्मानं साम्बस्याग्रे रविस्तदा ।
वरं वृणीष्व भद्रं ते मद्भक्तख्यापनाय च ॥
यस्तोषितो नारदेन तद् वदस्व मदग्रतः ।
साम्ब ! पञ्चाशता श्लोकैर्वेदगुह्यपदाक्षरैः ॥
यः स्तुतोऽहं त्वया वीर ! तेन तुष्टोऽस्मि ते सदा ।
स्पृष्टा देवेन सर्वाङ्गे तत्क्षणाद् दीप्तसच्छविः ॥
व्यक्ताङ्गावयवः साक्षाद् द्वितीयोऽभूद् रविर्यथा ।
..................................... ... ॥
एवं साम्बस्य तुष्टेन मध्याह्ने तु नभस्तलात् ।
द्विधाकृतात्मयोगेन साम्बकुष्ठमपोहत ॥

साम्बप्रख्याततीर्थे तु तत्रैवान्तरधीयत ।
साम्बस्तु सह सूर्येण रथस्थेन दिवानिशम् ॥
रविं पप्रच्छ धर्मात्मा पुराणं सूर्यभाषितम् ।
भविष्यत्पुराणमिति ख्यातं कृत्वा पुनर्नवम् ॥
साम्बः सूर्यप्रतिष्ठां च कारयामास तत्त्ववित् ।
........................................... ॥
स्वनाम्ना ख्यापयामास पुराणविधिना स्वयम् ।
एवं साम्बपुरं नाम मथुराणां कुलेश्वरम् ॥
रथयात्रां तथा कृत्वा रविणा कथिता यदा ।
माघमासस्य सप्तम्यां देवं साम्बपुरं नराः ॥
रथयात्रां प्रकुर्वन्ति सर्वद्वन्द्वविवर्जिताः ।
गच्छन्ति तत् पदं शान्तं सूर्यमण्डलभेदकम् ॥"

इत्यादिनिरूपणात् कृष्णाज्ञप्तः **साम्बः** श्लोकपञ्चाशिकया भगवन्तमादित्यं तुष्टाव । तुतोष च भगवानादित्य इति विशदं भवति ।

किञ्च, अस्मत्प्रकाश्यमानव्याख्यायामन्त्ययोरुभयोः श्लोकयोर्यथाक्रमं— "**सूतः** पुराणवक्ता स्तुतिकथां निगमयति", "श्रोतॄणां मुनीनामाशीर्वादं करोति **सूतः**" इत्यवतारिकायोजनेन पुराणान्तर्गतत्वावश्यम्भावोऽस्याः **पञ्चाशिकायाः** शक्यानुमानः ।

पञ्चाशता पद्यैः परिमिता सेयं **पञ्चाशिका साम्बेनैव** प्रणीतेति "**साम्बपञ्चाशिके**"ति नाम्ना सिध्यति ।

अत्रास्ति किञ्चिदवधातव्यम्—अस्मिन् प्रस्तुतग्रन्थे एकादशपद्यव्याख्यानादौ—

"अतीता दश श्लोकाः श्री**कृष्णेन** कृता इति सम्प्रदायः"

इति वचनात् प्रथमा दशश्लोकी श्रीकृष्णविरचितेति ज्ञायते । सत्येवं सम्पूर्ण**पञ्चाशिकाविरचनं साम्बकवेर्विमर्शनमर्हति** ।

"ध्यात्वा ब्रह्म प्रथममतनु प्राणमूले नदत् तद्
दृष्ट्वा चान्तः प्रणवमुखरं व्याहृतीः सम्यगुक्त्वा ।

यत् तद् वेदे तदिति सवितुर्ब्रह्मणोक्तं वरेण्यं
तद् भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये ॥"
(श्लो० १०)

इति दशमश्लोकेन "तत् सवितुर्वरेण्यं भर्गः" इति गायत्रीमन्त्रघटकानि तदादिपदान्युच्चार्य भर्गश्शब्दलक्ष्यमादित्यस्य स्वरूपमुपगाय कृत इव कश्चिदुपसंहारो दशश्लोक्यास्तस्याः कृष्णकृतत्वाभ्यूहेऽनुकूलः सम्पद्यते ।

अपि चयमेव दशश्लोकी समनन्तरैश्च द्वात्रिंशता विवरणप्रायैः श्लोकैरुपबृंह्यत इति च वास्तविकी स्थितिरस्य साम्बस्य पितुः कृष्णादुपदेशरूपेणाविर्भूतामिमां गमयति । एतावता पञ्चाशिकान्तर्गताः प्रथमे दश श्लोकाः सूत्ररूपेण कृष्णकृता एव साम्बेन भक्त्या पठिताः, साम्बोपज्ञानि चेमांस्तन्मुखपठितान् जानन्तो जनाः सङ्कलय्य पञ्चाशिकां तत्कृतां प्रत्यपद्यन्तेत्यविरुद्धा पञ्चाशिकायाः साम्बकृतत्वप्रतिपत्तिः समञ्जसा ।

सर्वथा स्तोत्रमिदमध्यात्मगर्भं भक्तिश्रद्धाद्यखिलसात्त्विकवृत्तिसमर्पणद्वारा स्तोतॄणां परमपदप्राप्तिक्षमं साक्षात्कृतपरावराणां योगिनां, सहृदयधुरन्धराणां महाकवीनामपि समुपजीव्यं विजयते । अत्रेयमुदाहरणदिक्—

"सत्यं भूयो जननमरणे त्वत्प्रपन्नेषु न स्त-
स्तत्राप्येकं तव नुतिफलं जन्म याचे यदीत्थम् ।
त्रैगुण्येशः शम इव परः पुण्यकायोऽप्ययोनिः
संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम् ॥"
( श्लो० ३४)

इति साम्बीयं पद्यं

"वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे! न क्वापि क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिमा-
नितीश! क्षन्तव्यं तदिदमपराधद्वयमपि ॥"

इति सुप्रसिद्धापराधक्षमापणपद्याशयस्य क्वापि मूलखनिरिति स्पष्टम् । तथा—

"दिव्यं ज्योतिःसलिलपवनैः पूरयित्वा त्रिलोकी-
मेकीभूतं पुनरपि च तत्सारमादाय गोभिः ।

अन्तर्लीनो विशसि वसुधां तद्गतः सूयसेऽन्नं
तच्च प्राणस्त्वमिति जगतां प्राणभृत् सूर्य आत्मा ॥"
(श्लो० २४)

इति च पद्यं

"सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः"

इति महाकविश्रीकालिदासीयपद्यखण्डस्य प्राणायितं प्रतिभाति ।

मुम्बय्यां निर्णयसागरमुद्रणालयात् क्षेमराजकृतटीकासमेताया अस्याः साम्बपञ्चाशिकायाः काव्यमालासञ्चिकासु त्रयोदशाङ्कतया जातेऽपि प्रसिद्धीकरणेऽद्ययावदनुपलब्धनूतनव्याख्यासनाथतया अधुनेह प्रकाशनमपेक्षितम् ।

अस्य च नूतनस्य व्याख्यातुर्देशनामधेयादिकमवगन्तुं न किमप्यौपयिकं पश्यामः । सुविशदेन दलकृत्यनिर्वहणसमर्थेन चार्थनिर्वर्णनप्रस्थानेन निकाममियं व्याख्या क्षेमराजीयामतिशेत इति वचनाद् वरं सहृदयानां विदुषामनुभवः प्रमाणम् ।

एतद्ग्रन्थप्रसाधनोपयोगिनः परिशोधनस्य कृते क-ख-ग-संज्ञिता मातृकास्तिस्र उपयुक्ताः ।

तासु प्रथमा कोट्टारकर ब्रह्मश्री भानुभानुपण्डारत्तिल्ग्रन्थशालीया जरत्तमा न समग्रा ।

द्वितीया कुन्नङ्नाडु पुन्नोर्कोट्टुमन ब्रह्मश्री तुप्पन् तुप्पन् नम्पूरिप्पाडुस्वामिका समग्रा ।

तृतीया कोच्चिराज्यान्तर्गततैक्काट्टुश्शेरि ब्रह्मश्री इलयिटत्तु नारायणन् मूस्स्वामिका समग्रा ।

सर्वा अप्येताः प्रायश्चतुश्शतसंवत्सरवृद्धाः केरलीयलिपयः शुद्धकल्पाः ।

अनन्तशयनम्,
२०-१२-१०५.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणी ।

विषयः. श्लोकसङ्ख्या.



---

॥ श्रीः ॥

# साम्बपञ्चाशिका

## सव्याख्या ।

---

शब्दार्थत्वविवर्तमानपरमज्योतीरुचो गोपते-
रुद्गीथोऽभ्युदितः पुरोऽरुणतया यस्य त्रयीमण्डले ।
भास्वद्वर्णपदक्रमेरिततमः सप्तस्वराश्वैर्वियद्
विद्यारयन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे ॥ १ ॥

नमः समस्तजन्तूनां प्राणानां प्राणदायिने ।
सर्वदाय जगद्धात्रे सवित्रे परमात्मने ॥

शब्दार्थेति । अनेन आदित्यः स्तूयते, न शब्दराश्यादिः[1] । या वाक्य-वृत्तिर्गुणगणकीर्तनेन[2] देवताया अहो अहमित्याश्चर्यबुद्धिजननी सा स्तुतिरिति स्तुतिलक्षणम् । वैचित्र्यप्रतिपादनमाश्चर्यबुद्धिहेतुः । तत् त्रिविधं वैचित्र्यं, शब्दतोऽर्थत उभयतश्चेति । अयं श्लोक उभयतोवैचित्र्यप्रतिपादकः । तथा-हि—एक एवादित्यः जगद्भासकत्वेन[3] वेदरूपेण जीवरूपेण ब्रह्मरूपेण च स्थित इति वैचित्र्यम् । अयं श्लोक उत्तरश्लोकानां सूत्रभूतः । उत्तरे व्याख्या-नरूपाः । एकस्य वाक्यस्य चतुर्ष्वर्थेषु[4] पृथक् पृथग् वाचकत्वसामर्थ्यं श-ब्दतो वैचित्र्यम् । अत एक एवावृत्त्या चत्वारः श्लोका भवन्ति । सूत्रवदेक एवादित्यः चतुर्धा व्यवस्थित इत्यर्थः । अनेन गुणकीर्तनं च देवस्य भवति । (यद्) यल्लोके चक्षुर्वेद्यं तेषां श्रेष्ठतमं मण्डलं विराड्रूपस्य[5] चक्षुः । एवं लोके श्रोत्रग्राह्याणां वेदः । तद्रूपेण स्थितो हिरण्यगर्भश्चादित्यः । स्वप्नावस्था च स एव । मनसा ध्यातव्यानां[6] ब्रह्म । त्रयाणां साधको यजमानः । सुषुप्त्य-

---

१. 'शिः या', २. 'णर्का' क. पाठः. ३. 'गत्कर्ता । स एक' ख., 'गदव-भास' ग. पाठः. ४. 'र्थे न श', ५. 'राट्पुरुषस्य', ६. 'नां तद् ब्र' ख. पाठः.

G. P. T. 1962. 500. 4-7-1105. B

वस्थाव्याकृतं जीवोपाधिः सात्त्वतानां सङ्कर्षणवाच्यः अधिदैवे । अध्यात्मे सुषुप्त्यभिमानी प्राज्ञो जीवः । त्रयाणां सत्तास्फूर्तिपदं ब्रह्म तुरीयं निर्गुणम् । तद्रूपेणापि स्थित आदित्य इत्यर्थतो वैचित्र्यं भगवतः सूचितम् । एवमेक एवादित्यश्चतुर्धा व्यवस्थित इत्याश्चर्यप्रदर्शनम् । प्रथममादित्ये योजना — शब्दश्चार्थश्च शब्दार्थौ, तयोर्भावः शब्दार्थत्वम् । त्वशब्द उभयत्र सम्बध्यते । शब्दत्वेनार्थत्वेन चेत्यर्थः । गौरिति शब्दः । सास्नालाङ्गूलविषाणाद्यर्थः उभयरूपेण विवर्तमानम् । इत्थम्भावे तृतीया । पूर्वरूपापरित्यागेन रूपान्तरात्मनावभासस्थितिश्च विवर्तः । यथा रज्जुः सर्पस्वरूपेण, आत्मा च स्वप्नप्रपञ्चरूपेण, तद्वत् । परममुत्कृष्टं ज्योतिः स्वप्रकाशमित्यर्थः । सर्वं जगत्कारणं ब्रह्मेति भावः । एतदेव रुग् भासकं प्रकाशदातृ यस्यादित्यस्य स शब्दार्थत्वविवर्तमानपरमज्योतीरुक् तस्य । तदुक्तं 'येन सूर्यस्तपति तेजसेद्धः' इत्यादिषु । तत्त्वदृष्ट्या ब्रह्मरूपत्वमादित्यस्य सूचितम् । गवां रश्मीनां पतिर्गोप्ता स्वामी तस्य । उद्गीथ इति प्रणव इत्यर्थः ।

"उद्गीथः प्रणवोऽनन्तः सर्वव्यापी निरञ्जनः"

इति नैरुक्तप्रयोगदर्शनात् । अभ्युदितः समीपेऽभिव्यक्तः । तत्रापि पुरः । पूर्वस्यां दिशीत्यर्थः । लोकदृष्ट्या पुर इति कथ्यते, सर्वदिक्षु समत्वादादित्यस्य । अथवा रथस्थस्यादित्यस्य पुरतः । कथमिवाभ्युदितः । अरुणतया । अरुणो नाम पक्षिविशेषः । स आदित्यस्य सारथिरिति वेदप्रसिद्धिः । सा तु स्थूला प्रसिद्धिः । न त्वरुणमात्रं सारथिः । किन्तु उद्गीथः प्रणवः । आदित्यमण्डलस्य वेदत्रयरूपत्वात् । प्रणव एव नेतारुणं प्रविश्य । यस्यादित्यस्येत्यर्थः । ऋग्यजुःसाम्नां समाहारस्त्रयी । त्रयी च तन्मण्डलं चेति त्रयीमण्डलम् । वर्तुलीभूतं प्रकाशते लोकस्येति मण्डलशब्दः । तस्मिन्नुदयमासादयति सति पुर उद्गीथ उदितः इति योजना । भास्वद्वर्णपदक्रमेरिततम इत्यरुणस्य पक्षविशेषणम् । (भास्वद्) भास्वरं प्रकृष्टप्रकाशं वर्णं रूपं ययोः पदयोः पक्षयोः ते भास्वद्वर्णपदे । रथस्य पुरोदेशप्रकाशके । तयोः क्रमे विक्षेपे चालने इत्यर्थः । ताभ्यामीरितं प्रेरितं विनाशितं तमो यस्य वियतो बाह्याकाशस्य तत् तथोक्तम् । तम इति द्वितीयैकवचनम् । वियदिति च तद्वत् । तत् प्रति विद्यास्यन्दनम् ।

१. 'प्र' ग. पाठः. २. 'वैङ्ग ज', ३. 'त्वं चादि', ४. 'गोपतिः स्वा' ख. पाठः ५. 'दे च प्र', ६. 'प्रका' क. पाठः.

लोकानां प्रपञ्चज्ञानमत्र विद्या विवक्षिता। विद्यासाधनं स्पन्दनं विद्यास्पन्दनम्। आदित्यरथसञ्चारनिमित्तं प्राणिनां प्रपञ्चज्ञानमिति भावः। उन्नयन्निव ऊर्ध्वं नयन्निव। अजां ग्रामं नयतीतिवद् द्विकर्मकम्। इवशब्द ईषदसमाप्तौ। अयं भावः — यद्यपि समभावेन पूर्वदेशं प्रत्येव रथं नयत्यरुणः, तथापि लोकस्योर्ध्वदेशं प्रति गच्छत्यादित्यमण्डलमिति प्रतीतिस्तदनुसारेण निर्देशः कविलक्षणम्। सप्तस्वराश्वैः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः सप्त स्वराः। ते आदित्यस्याश्वस्वरूपेण परमेश्वरानुग्रहादवस्थिता इति पुराणप्रसिद्धिः। तैरश्वैः। तस्मै परब्रह्मणे नम इति। अपरब्रह्म आदित्य इति न्यायसिद्धं विराड्रूपत्वाद्धिरण्यगर्भत्वाच्च। तथापि परब्रह्मैवादित्यरूपेण लोकानुग्रहार्थं लीलाविग्रहं कृत्वा प्रविश्य तिष्ठतीति परब्रह्मशब्दः। अथवा — तत्त्वदृष्ट्या परब्रह्मैवादित्यः, 'सूर्य आत्मा जगतस्तस्थुषश्चे'ति मन्त्रस्य उभयार्थत्वात्। 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यादिश्रुतेश्च। यस्य गोपतेः शब्दार्थत्वविवर्तमानपरमज्योतीरुचः उद्गीथः अरुणतया भास्वद्वर्णपदक्रमेरिततमः वियत् प्रति सप्तस्वराश्वैः विद्यास्यन्दनमुन्नयन्निवाभ्युदितः तस्मै परब्रह्मणे नम इति योजना। अनेन जाग्रदवस्था प्रतिपादिता। सर्वदेवतारूपत्वादादित्यस्य सर्वप्राणिनां सर्वकरणानि चादित्यरूपाणि। तैः इन्द्रियैरर्थोपलब्धिर्जागरणमिति भावः। इदानीं स्वप्नावस्थां हिरण्यगर्भलक्षणं वेदरूपां नमस्करोति श्लोकेन। तथाहि — वेदचतुष्टयाभिमानिदेवतात्मने परब्रह्मणे नमः। किंलक्षणो वेदात्मा। तत्राह — शब्दार्थत्वविवर्तमान इति। परमज्योतिर्ब्रह्मैव सर्वयोजनासु. जगत्कारणत्वात्। तस्मिन् परमज्योतिषि रुग् भासनसामर्थ्यं यस्य वेदात्मनः स तथोक्तः। गोपतेः गवां सर्वशब्दानां पतिः कारणं स्वामी वेदः। वेदप्रयोगमूलत्वात् सर्वशब्दानां गोपतिर्वेदः। पुनरपि वेदात्मानं विशिनष्टि — यस्य वेदात्मनः त्रयीमण्डले। पूर्ववत् समासार्थः। उदयमासादयति सति। वेदस्योच्चारणं मण्डलस्योदयः। तस्मिन् काले उद्गीथः प्रणवः अभ्युदितः अभितः सर्वत्र उदित उक्तः। अध्येतृभिरुपाध्यायैः(श्च) विघ्नविनाशार्थं प्रणवपूर्वकं वेदोच्चारणं तत्तत्काले प्रसिद्धम्। तदुक्तं 'ओमिति ब्राह्मणः प्रवक्ष्यन्नाह' इति।

१. 'त्यमण्डलस्या', २. 'तिभ्यश्च', ३. 'श्च', ४. 'ना। जा' ख. पाठः. ५. 'णि। इ' क. पाठः. ६. 'णां देहवे', ७. 'तत्का' ख. पाठः.

'स्रवत्यनोंकृतं ब्रह्मे'ति च। पुरः पूर्वमित्यर्थः। अरुणतया। अरुणसाम्यादरुण इत्युच्यते विद्यास्यन्दननेतृत्वात्। कथमिवोदितः। आह — विद्यास्यन्दनम् (उन्नयन्निव) संहितालक्षणविज्ञानं विद्या। सा स्यन्दनवत् रथवत् पुरुषार्थप्राप्तौ साधनत्वात्। स्यन्दनमुन्नयन्निव प्रेरयन्निव, प्रतिबन्धनिवर्तकत्वादध्ययनकाले। इवशब्दः पूर्ववत्। यद्यपि माणवकानां प्रयत्ननिमित्तमेव संहिता विद्या जायते, तथापि तत्र प्रतिबन्धनिवर्तकः प्रणवः, तेनेवशब्दः। कुत्र विद्यास्यन्दनं नयति तत्राह — वियदिति। वियत् प्रति। पाठकानां हृदयाकाशं वियत्। (तत्) प्रति विद्यास्यन्दनयोग्यत्वात्। कीदृशं वियदित्याह — भास्वद्वर्णपदक्रमैरिततमः। अर्थप्रकाशकत्वं वर्णानां भास्वरत्वम्। पदानामपि तदेव। क्रमस्य तु संहितास्वरूपज्ञानहेतुत्वं भास्वरत्वम्। तैरीरितं विनाशितं तमः संहिताविषयाज्ञानं यस्य वियतः। तत् प्रति विद्यास्यन्दनं[२] प्रणयति प्रणवः प्रतिबन्धनिवर्तकत्वात्। सप्तस्वराश्वैः स्वरशब्देनात्र सप्त छन्दांसि कथ्यन्ते। वक्ष्यति च—'सप्तच्छन्दांस्यपि च तुरगा' इति। तैरुपकृतः उद्गीथः संहिताविद्यां जनयति। ऋष्यादिवत् संहिताविद्योत्पत्तौ छन्दांस्युपकुर्वन्त्यश्वा इव ग्रामप्राप्तावित्यर्थः। अथवा अन्ये सप्त स्वराः साम्न्युपकुर्वन्ति। अकारादयः उकारपर्यन्तास्त्रयः[३] एकाराद्या औकारान्ताश्चत्वारः, सामगानस्य सप्तवर्णप्रधानत्वात्। अश्ववदश्वाः तैः साम प्रधानं मण्डलं गच्छतीति केचित्। तस्मै परब्रह्मणे नम इति। अयमाशयः—ब्रह्मैव लोकरक्षार्थं वेदरूपेण विवर्तत इत्यभेदविवक्षया परब्रह्मशब्दो वेदे। एवं स्वप्नाभिमानिनो हिरण्यगर्भस्य स्तुतिः। इदानीं जीवरूपेणाप्यादित्यः स्तूयते। द्विरूपो जीवः। अध्यात्मे यजमानः प्राज्ञः प्रधानः। अधिदैवे अव्याकृतः कारणमात्मा सङ्कर्षणो जीव इति सात्त्वता वदन्ति। गीतायामप्युक्तम्—

"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो! ययेदं धार्यते जगत्॥"

इति। तत्रानेनोभयविषया[४] स्तुतिः। तथाहि — शब्दार्थत्वविवर्तमानपरमज्योतिर्ब्रह्म। तस्य रुगेव रुक् स्वरूपज्ञानं यस्य जीवस्य स तथोक्तः। तथाच श्रुतिः—'तस्य भासा सर्वमिदं विभाती'[५]ति। अथवा परमज्योतिषि

१. 'ताज्ञा', २. 'नं नय', ३. 'यः ऋकारऌकारवर्जिताः औ', ४. 'तन्त्रेणोभ' ख. पाठः. ५. 'तीह' ग. पाठः.

रुक् साक्षात् प्रमाणं यः शोधितस्त्वम्पदार्थो जीवः । तदुक्तं बृहदारण्यके— 'यथाह वै पदेनानुविन्देदि'ति । यथा लोके भूगतगोपदलाञ्छनेन दूरगतां गां पश्यति, एवं त्वम्पदार्थेन वाक्यार्थभूतं ब्रह्मापरोक्षीकरोतीति दार्ष्टान्तिकम् । पुनरपि विशिनष्टि — गोपतेरिति । गोशब्दवाच्यानां पतिर्यजमानः, साक्षी वा । अपकृष्टत्वाज्जीवस्य स्तुतिरयुक्तेति केचित् । तत्राह — यस्य जीवस्य जीवावस्थां प्राप्तस्यापि उद्गीथः वेदश्रेष्ठोऽपि सारथिवद् गुणभावेन विद्यास्यन्दननेतृत्वेनाभ्युदितः त्रयीमण्डले वेदसमूहे अभितः अरुणभागेषु च सर्वत्र उदित उक्तः साधनत्वेन 'प्रणवो धनुः शरो ह्यात्मा', 'तद् यथा शङ्कुने'त्यादौ, तस्य नमस्कार्यत्वं किं वक्तव्यम् । पुरः पूर्वस्यां संसारावस्थायामित्यर्थः । अरुणतया सारथित्वेन । अरुणः सारथिरिति प्रसिद्ध्या रूप्यते साम्येन । कथमरुणसाम्यम् । तत्राह — विद्यास्यन्दनमुन्नयन्निवेति । ब्रह्मज्ञानं विद्या । तदेव मोक्षप्राप्तिसाधनत्वात् स्यन्दनवत् स्यन्दनम् । वियदिति हृदयाकाशं, जीवस्य प्रत्यगात्मा वा । तं प्रति उन्नयन्नापादयन् । इवशब्दः पूर्ववत् । यद्यपि महावाक्यमेव बुद्धौ विद्यास्यन्दनमुन्नयति, (तथापि) तस्य ज्ञानोत्पादने पापादिप्रतिबन्धनिवर्तकः प्रणवः । तस्मादिवशब्दः । कीदृशं वियत् । तत्राह — भास्वद्वर्णपदक्रमैरिततम इति । भास्वद्वर्णानां बोधकानां क्रमः पूर्वापरीभावः पदं पदानां क्रमो वाक्यम् । 'सत्यं ज्ञानमि'त्याद्यवान्तरवाक्यानीत्यर्थः । महावाक्यान्यपि क्रमशब्देन विवक्षितानीति केचित् । तैरीरितं प्रेरितं विनाशितं तमः पदार्थाज्ञानं यस्य वियतः हृदयाकाशस्य तत् तथोक्तम् । सप्तस्वराश्वैः । प्रणवस्य लीलाविग्रहाः सप्तस्वराः । अकारोकारमकारा जाग्रत्स्वप्नसुषुप्तिवाचकाः क्रमेण बिन्दुनादशक्तिशान्तान्ता अपरे पुराणादिसिद्धाः । ते योगसमाधिनिष्ठानां निर्गुणप्राप्ताश्वाः मार्गनेतारः । तैर्विद्यास्यन्दनं हृदयाकाशं प्रति मुमुक्षोर्नयति प्रणवः । बिन्दुनादादिभिरपि देवतारूपैः सूक्ष्मतमोनिवृत्तिरिति मन्यन्ते । महावाक्यरूपेण वा प्रणवो विद्यां नयति ।

"सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं वै पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत् ॥"

१. 'दमार्गणेन दू', २. 'र्थपूर्वं त्र', ३. 'अ' ख. पाठः.

इत्यादिन्यायेन महावाक्यं प्रणवः । ततो जीवस्य ब्रह्मत्वं बोधयतीति भावः । भाविनीं वृत्तिमपेक्ष्य वस्तुवृत्त्या ब्रह्मत्वात् त्वम्पदार्थे परब्रह्मशब्दः । तस्मै नमः इति प्रह्वीभावो न वेदादित्यपरः । हृदयं प्रति विद्यास्यन्दननेतृत्वं जीवपक्षे लिङ्गम् । नहि वेदात्मनः हृदयं प्रति प्रणवेन विद्या दातव्या, सर्वज्ञत्वात् । परब्रह्मपक्षे योजना । परमिति विशेषणमपरब्रह्माप्यत्र विवक्षितमित्यत्र लिङ्गम् । यद् ब्रह्म सर्वप्रमाणाविषयत्वेन वेदान्ते प्रसिद्धं तस्मै परब्रह्मणे नमः । किं लक्षणम् आह — शब्दार्थत्वविवर्तमानपरमज्योतीरुचः । शब्दत्वेन वाचकरूपेण अर्थत्वेन वाच्यरूपेण विवर्तमानं मायाबलादवभासमानं ज्योतिश्चेतनं स्वयम्प्रकाशमित्यर्थः । परमं च तद् ज्योतिश्चेति परमज्योतिः । जीववदमुक्तभ्रान्तिशून्यमित्यर्थः । तत्र किं प्रमाणमित्याशङ्क्याह — परमज्योतीरुच इति । परमज्योतीरुक् प्रमाणं यस्य तत् । स्वरूपप्रकाशने स्वप्रकाशत्वाद् मानान्तरं नास्तीत्यर्थः । तदुक्तं — 'यतो वाचो निवर्तन्ते' 'यन्मनसा न मनुते' इत्यादिश्रुतेः । गोपतेः गवां चक्षुरादीन्द्रियाणां पतिः स्वामी सत्तास्फूर्तिप्रदः । 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मन' इत्यादिवाक्येन सर्वव्यवहारातीतं परं ब्रह्म प्रमितम् । तस्येत्यर्थः । इतश्च निर्विशेषं ब्रह्मास्तीत्याह — उद्गीथोऽभ्युदितः पुरोऽरुणतया यस्य त्रयीमण्डले इति । उद्गीथः प्रणव इत्युक्तम् । संसारिणां जीवानां पुरः पूर्वमज्ञानावस्थायामित्यर्थः । यस्य विद्या यद्विषया विद्या स्यन्दनवन्मोक्षसाधनत्वात् । यथा आदित्यस्य स्यन्दननेता अरुणः एवं संसारिणां हृदयाकाशं प्रति ब्रह्मविषयविद्यास्यन्दनं नयत्युद्गीथ इति । त्रयीमण्डले त्रयीसमूहे । अभ्युदितः अभितः सर्वत्रोदितः उक्तः । 'परं चापरं च ब्रह्म यदोङ्कारः', 'सर्वे वेदा यत्पदमामनन्ती'त्यादौ जीवानां निर्गुणब्रह्मविषयविद्यामुत्पादयति प्रणव इति प्रसिद्धमिति भावः । कीदृशं हृदयाकाशमिति तत्राह — भास्वद्वर्णपदक्रमेरिततम इति । वर्णानां पदानां च भास्वत्त्वं पूर्वमुक्तम् । तेषां क्रमः पूर्वापरीभावो वाक्यमित्युक्तम् । सत्यज्ञानाद्यैरवान्तरवाक्यैर्महावाक्यैश्च शोधितपदार्थज्ञानाधारहृदयाकाशं प्रति बुद्धौ विद्यास्यन्दनमुन्नयति । सप्तस्वराश्वैः पूर्वोक्तैः प्रणवस्यावस्थाविशेषैरकारोकारमकारबिन्दुनादशक्तिशान्तैः जीवपक्षेऽपि तेषां करणत्वमुक्तम् । अयं विशेषः—पूर्वं जीवस्य विद्यासाध-

१. 'वेन वे' ग. पाठः. २. 'वनमु'. ३. 'तिभ्यः । गो', ४. 'तं ब्र', ५. 'प्रविश्य विद्या' ख. पाठः.

नत्वेन स्वराः प्रणवश्चोक्ताः । इदानीं ब्रह्मस्तुतिपरत्वेन ब्रह्मणो माहात्म्य-प्रकाशकत्वेन गुणसूचकत्वेन उक्तः । यस्य ब्रह्मणो विद्यास्यन्दनं प्रणवेन प्रतिपादितं तस्य माहात्म्यं निरतिशयमित्यर्थः । तस्मै ब्रह्मणे नम इति पूर्ववत् । आदित्यवेदजीवब्रह्मणामेकत्वमपि शब्दच्छलेन सूचितम् । तथाहि — शब्दार्थत्वविवर्तमानपरमज्योतीरूपत्वं चतुर्णां तुल्यमित्युक्तम् । गोपतित्वमपि चतुर्णां समानम् । उद्गीथारुणस्य विद्यास्यन्दननेतृत्वमपि वियत् प्रति सप्तस्वराश्चैश्चतुर्णां तुल्यम् । तस्मादेकलक्षणलक्षितत्वाद् एक एवादित्य ऐश्वर्यप्राचुर्याच्चतुर्धा व्यवस्थित इति विद्यमानगुणकीर्तनं स्तुतिः । अरुणसारथिरित्यादित्यलिङ्गम् । उद्गीथः प्रथममुदित इति वेदलिङ्गम् । यस्य विद्येति जीवलिङ्गम् । परब्रह्मणे इति निर्गुणब्रह्मलिङ्गं, श्रुतिर्वा । पदान्तरनिरपेक्षः शब्दः श्रुतिः । नच वाक्यभेदः । सूत्ररूपत्वात् प्रथमश्लोकस्यावृत्तिसम्भवात् । जाग्रदवस्था विश्वमादित्यः । स्वप्नावस्था वेदात्मा हिरण्यगर्भः । सुषुप्त्यवस्था जीवः । स द्विविधः अधिदैवे अव्याकृतम् । अध्यात्मे प्राज्ञः । तुरीयावस्था निर्गुणब्रह्मेति सर्वो वेदार्थः सूत्रितः । अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवा वेदार्था इति सात्त्वतानां मतमपि सूचितम् । साम्बस्य सात्त्वतत्वात् । अस्य श्लोकस्य व्याख्यानमुत्तरो ग्रन्थः[2] ॥ १ ॥

स्वप्नावस्थां प्रपञ्चयितुमाह —

यस्मात् सर्वं प्रसरतितरां ज्ञप्तिकर्तृस्वभावाद्
रूपैर्बाह्यैर्विषयरचितैरावृतिर्यस्य नास्ति ।
शब्दार्थाभ्यां वितथमिव यस्तथ्यरूपं विधत्ते
जीवादित्यं तमहमतनुं चिन्नभस्थं नमामि ॥ २ ॥

यस्माद्धिरण्यगर्भावस्थां[3] प्राप्तादित्यर्थः । सर्वं पाञ्चभौतिकं चतुर्विध-प्राणिजातं चेत्यर्थः । प्रसरतितरां पुनः पुनरुत्पद्यते ब्रह्मणः[4] प्रातः-काल इत्यर्थः । तरामिति तरप्प्रत्ययोऽतिशयार्थः । पठतितरामितिवत् । (अतिशयेन) उत्पद्यते इत्यर्थः । ज्ञप्तिकर्तृस्वभावात् । ज्ञप्तिरिति ज्ञानशक्ति-र्लक्ष्यते । कर्तृशब्देन क्रियाशक्तिः । ते स्वभावः स्वाभाविकम् आविद्यकं

१. 'ह्मप्राधान्येन' ख. पाठः. २. 'न्थः ॥ य' क. पाठः. ३. 'भोदि', ४. 'णः पृथक्कृतमित्य' ख. पाठः.

रूपमुपाधिर्यस्य हिरण्यगर्भस्य स तथोक्तः । जनिकर्तुः प्रकृतौ पञ्चमी-विभक्तिः । अतश्च दध्युत्पत्तौ क्षीरस्येव नाशः प्रसक्तः कारणस्येत्याह — रूपैर्बाह्यैर्विषयरचितैरावृतिर्यस्य नास्तीति । रूप्यन्ते ज्ञायन्त इति रूपाणि । अहङ्कारादीनि पृथिव्यन्तानि । बाह्यैः स्थूलैर्हिरण्यगर्भकार्यैः विषयरचितैः, शब्दादयो विषयाः, तद्रूपेण रचितैः निर्मितैः परस्परघटितैरहङ्कारादिभिः समष्टिव्यष्टिस्थूलादिभावेन परिणतैः आवृतिरावरणं ज्ञानैश्वर्यादीनां तिरोभावः । यस्य कारणस्य हिरण्यगर्भस्य नास्ति । निरतिशयशक्तिमानादित्य इति भावः । अत्र विवर्तत्वादिति हेतुमाह — शब्दार्थाभ्यां वितथमिव यस्तथ्यरूपं विधत्ते इति । शब्दो वाचकः अर्थो वाच्यः ताभ्याम् । इत्थंभावे तृतीया । शब्दरूपेणार्थरूपेण च वितथं मिथ्या मायात्मकं जगत् । इवशब्द एवकारार्थे । मायात्मकमेव (सर्गः?) । अथवा लोकप्रसिद्धवितथवत् गन्धर्वनगरवत् । पूर्वश्लोकस्य प्रथमपादव्याख्यानमेतत् । 'नामरूपाभ्यां व्याकृतमि'ति श्रुतेः । यः आदित्यात्मतां प्राप्तः परमात्मेत्यर्थः । तथ्यं सत्यं रूपमधिष्ठानं वितथमिव विधत्ते करोतीत्यर्थः । यदि परिणमयति तर्हि पूर्वरूपनाशः स्यात् । यदा विवर्तोत्पत्तौ सङ्कल्पमात्रेण दृष्टिसृष्टौ कारणं हिरण्यगर्भः, तदा न स्वरूपनाश इति भावः । जीवादिरयं जीवश्चासौ सर्वेषां प्राणधारकत्वात् चेतनत्वाच्च अदितेरपत्यत्वाभिमानित्वाच्चादित्यः । तस्य जीवशब्दवाच्यस्य कथं नित्यत्वमिति तत्राह — अतनुमिति । तनुः शरीरं शबलं सूक्ष्मं स्थूलं च । तच्छून्योऽतनुः तम् । वस्तुतो ब्रह्मैवेति भावः । अतनोरादित्यशब्दो विरुद्धः आकाशगते स्थूलमण्डले रूढत्वादित्याशङ्क्याह — चिन्नभस्थमिति । निर्गुणेऽप्याकाशशब्दो वेदे रूढः 'परमे व्योमन्नि'त्यादौ । अतश्च चिदिति प्रकाशं ब्रह्म । परमात्मेत्यर्थः । तदेव नभः । तस्मिन् परमात्मनि नभसि स्थित आदित्यस्यात्मा । यथा घटाकाशो महाकाशे स्थित इति भेदव्यवहार औपचारिकः, राहोः शिर इतिवत्, स्वे महिम्नि व्यवस्थितत्वाद् विष्णोः, एवमादित्यपरमात्मनोरभेदादतनुत्वं तत्स्थत्वं च सम्भवतीत्यर्थः । तमहं नमामीति संसारदृष्ट्या भेदनिर्देशः ॥ २ ॥

---

१. 'तिः', २. 'उभयशून्यो', ३. 'द', ४. 'त्वं नभस्थ' ख. पाठः.

पूर्वोक्तामव्याकृतावस्थां सुषुप्त्यभिमानिनः प्रपञ्चयन् हेत्वन्तरमाह —

ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो
वाणी यस्मात् प्रभवति परा शब्दतन्मात्रगर्भा ।
प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ ३ ॥

ओमित्यन्तरिति । अनेन श्लोकेन खस्थस्यादित्यस्य जीवस्य च देहे ब्रह्माभेदेन स्थितिरस्तीत्याह । ओमित्यनुवादः अनुकरणशब्दो वा । अन्तः । देहस्यान्तरित्यर्थः । इतिशब्दः प्रकारवाची । नदति नादलक्षणं शब्दं करोति । नियतं नियमेन सदा यः शब्दो भूत्वा शब्दात्मकत्वेन प्रसिद्ध इत्यर्थः । प्रतिप्राणि प्राणिनं प्रति । प्रतिर्वीप्सार्थः । सर्वप्राणिषु चेत्यर्थः । य आदित्यः शब्दो भूत्वा प्रतिप्राण्यन्तरोमिति नदति तस्माद् देहस्थ इति हेतुः । 'कर्णावपिगृह्य (निनदमिव नदथुरिवा)ग्नेरिव ज्वलत उपशृणोती'ति श्रुतेः । इतश्च देहस्थः सवितेत्याह — वाणी । सर्वशब्दानां वर्णानां च मूलभूता बीजावस्थेत्यर्थः । परा इति तस्या नाम शिक्षाशास्त्रसिद्धा ।

"मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः ।"

इति प्रसिद्धिः । तस्याः स्वरूपमाह — शब्दतन्मात्रगर्भेति । शब्दस्य सामान्याकारस्तन्मात्रं प्रथमावस्था । मात्र(या ? चा) वर्णविशेषा व्यावर्त्यन्ते । गर्भाः सर्ववर्णानां गर्भावस्था । अथवा यस्या अन्तः सूक्ष्मरूपेण सर्वे वर्णा गर्भीभूताः सा वाक् शब्दतन्मात्रगर्भा । देहस्थादित्यव्यापारं विना अस्या उत्पत्तिरशक्या । तस्माद् देहस्थो भगवानित्यर्थः । इतश्च देहस्थ इत्याह — प्राणापानौ वहति च समौ । यौ सूक्ष्मदेहस्य[1] नेतारौ प्राणापानौ । रज्ज्वा बद्धर्षभद्वयवत् परस्परबद्धौ प्राणापानौ । तत्र प्राणं गृहीत्वा अधोदेशं प्रति गच्छत्यपानः कदाचिद् बलात् । एवमपानं गृहीत्वोर्ध्वदेशं प्रति गच्छति प्राणः । तयोर्मध्ये निवारकाभावे मरिष्यति जनः । तत्प्रतिरोधार्थं कीलवन्मध्ये तिष्ठन् य आदित्यः समौ भवतो यथा तथा वहति·स्थापयति । तत्कालविशेषणम् । किमर्थं वहति तत्राह — मिथो ग्राससक्ताविति । मिथः पर-

१. 'क्ष्मशरीरस्य' ख. ग. पाठः.

स्परं ग्रसनं निगरणं प्रति सक्तौ श्रद्धावन्तौ । परस्परं ग्रसित्वा ऊर्ध्वाधो-देशगामिनौ प्राणापानावित्युक्तम् । तयोर्मध्यस्थोऽन्तर्यामी भूत्वा रक्षति सविता । एवं देहस्थं व्यापारत्रयकर्तारम् । सपदि हृदिस्थत्वे(न) वि-ज्ञाते सतीत्यर्थः । परमादित्यं परमात्मस्वरूपमादित्यम् । आद्यं भवं जग-त्कारणमित्यर्थः । प्रपद्ये एकत्वेनानुभवामि । अथवा प्रथमः श्लोकस्तत्प-दार्थविषयः । द्वितीयस्त्वम्पदार्थविषयः । अयं तु वाक्यार्थप्रतिपादकः । तथाहि — य एवं हेतुत्रयेण देहे साक्षित्वेन स्थितः परमात्मा, तमो-मिति सोऽहमिति प्रपद्ये अनुभवामि तत्त्वमस्यादिवाक्यैः । तदर्थानुवाद-रूप ओङ्कार इत्यन्ये । यन्महावाक्येनोक्तमेकत्वं तदोमित्यनुवदति । बाढ-मित्यर्थः । अथवा प्रणव एव महावाक्यम् । अथवा ज्ञानस्य साधनं मन्दानां प्रणवः । सर्वथा ब्रह्मविषयः श्लोकः ॥ ३ ॥

यस्त्वक्चक्षुश्श्रवणरसनाघ्राणपाण्यङ्घ्रिवाणी-
पायूपस्थस्थितिरपि मनोबुद्ध्यहङ्कारमूर्तिः ।
तिष्ठत्यन्तर्बहिरपि जगद् भासयन् द्वादशात्मा
मार्तण्डं तं सकलकरणाधारमेकं प्रपद्ये ॥ ४ ॥

अतीतश्लोके अध्यात्मे भगवतः स्थितिरुक्ता । अधिदैवे च स्थितिः प्रत्यक्षादिसिद्धा । उभयं समुच्चित्य जाग्रदवस्थां प्रपञ्चयत्यनेन श्लोकेन । यः अन्तर्बहिरपि द्वादशात्मा तिष्ठति तमेकं मार्ताण्डं प्रपद्ये इत्यन्वयः । कथम् । ज्ञानकर्मेन्द्रियाणि दश । तेषां स्थितिराधारः सूत्रात्मा प्राणः । स एकादश(:) । तदुक्तं—'स यथा सुहयः पड्वीशशङ्कून् सङ्खिदेत्' । 'प्राणो वा उक्थ उक्ष' इत्यादौ च सर्वकरणाश्रयः सूत्रात्मेत्युक्तं क्रियाशक्त्याश्रयत्वं च सूचितम् । इदानीं ज्ञानशक्त्याश्रयत्वं चाह — मनोबुद्ध्यहङ्कारमूर्ति-रिति । मनश्च बुद्धिश्चाहङ्कारश्च मनोबुद्ध्यहङ्काराः । तेषां मूर्तिः सूक्ष्म-शरीरम् । तद्रूपेणापि स्थित इति योजना । एवं प्राणिनां हृदये द्वाद-शात्मा तिष्ठति । स्थित्या क्रियाशक्त्या सह द्वादशसंख्यापूर्तिः । तथा बहि-रप्यधिदैवे मण्डले क्रमेण मेषादिमासाभिमानिन्यो द्वादश मूर्तयः पुराणादौ प्रसिद्धाः —

१. 'ब', २. 'द्धाः । मार्ताण्डः सविता पूषा इत्यादयः । ज' ख. पाठः.

"धातार्यमा च मित्रश्च वरुणांशौ भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यत्वष्टृविष्णवः ॥"

इति । जगद् भासयन् । द्वादशमूर्तीनां क्रमेण जगद्भासनं प्रयोजनमित्यर्थः । द्वादशमूर्तीनां समष्टिरूपो मार्ताण्डो महाभारते च सिद्धः । सकलकरणाधारमिति । ब्रह्मादिस्तम्बपर्यन्तप्राणिनामन्तःकरणबहिष्करणानामाश्रय आदित्य इत्यर्थः । अनेन विश्वरूपेणापि सर्वात्मकत्वं भगवतः सूचितं प्रपञ्चितम् । वस्तुतोऽपि प्रत्यग्रूपेणापि सर्वात्मकत्वमाह— एकमिति । अद्वितीयमित्यर्थः । तत्त्वदृष्ट्या सर्वजीवानां प्रत्यगात्मा, 'सूर्य आत्मा जगतस्तस्थुषश्चे'ति श्रुतेः ॥ ४ ॥

ओमित्यन्तरिति श्लोकेऽव्याकृतस्याध्यात्मत्वेन[1] देहावस्थानमुक्तम् । इदानीं तस्याधिदैविकं रूपं प्रपञ्चयन् नमस्करोति —

या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानत्र प्रकटकरणैः प्राणसङ्घात् प्रसूते ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥ ५ ॥

तत्र जगत्कारणं द्विविधमिति शास्त्रप्रसिद्धं प्रकृतिपुरुषरूपं मायाविशिष्टमित्यादिना । अजपामन्त्रे च[2] सवितु[3]रर्ध[4]नारीश्वरत्वेन प्रसिद्धिः । तत्र जडशक्तिः प्रकृतिः पत्नी पुरुषशक्तिश्चेतनारूपा । सैव सवितुः स्वरूपमिति, न शङ्कनीयम् । किन्तु प्रकृतिस्वरूपमपि भगवत एव लीलाविग्रहः ऐश्वर्यवशाज्जगद्रूपेण विवर्तते । तस्मात् तां वाग्देवतां नमस्करोमीति प्रतिपाद्यते श्लोकेन । या सा । शिक्षाशास्त्रादौ प्रसिद्धेत्यर्थः । मित्रावरुणसदनादिति । मित्रोऽग्निः आदित्यरूपत्वान्मित्रशब्दः । वरुणः सोमः जलाभिमानित्वात् । तयोः सदनं निवासभूमिः मूलाधारस्तस्मादित्यर्थः । उच्चरन्ती उत् ऊर्ध्वदेशं प्रति चरन्ती यान्ती वाग्देवता विवक्षिता । मित्रावरुणसदनादिति कारणं ब्रह्म लक्षितम् । तस्माद् वाचकरूपेणोत्पत्तिरभिव्यक्तिर्[6]यस्या देवताया इति भावः । त्रिषष्टिं वर्णानिति । ह्रस्वदीर्घप्लुतरूपे-

१. 'त्मे देहेऽत्र'. २. 'ण', ३. 'तार्ध', ४. 'द्धः', ५. 'ल' ख. ग. पाठः.
६. 'र्वा यस्या' ग. पाठः. ७. 'भेदेनाक्ना' ख. ग. पाठः.

णाकारास्त्रयः । एवमिकारोकारौ इति नव । ऋवर्णः[1] ह्रस्वप्लुतभेदेन द्विधा । एवं लृवर्णोऽपि । तयोर्दीर्घो न विद्यते । सन्ध्यक्षराणि दीर्घप्लुतभेदेनाष्ट-संख्यानि भवन्ति । एवमेकविंशतिः स्वराः । कादयो मावसानाः पञ्चविंशतिः । यकारादिक्षकारान्ताः दश । बिन्दुविसर्गौ द्वौ । जिह्वामूलीयोपध्मानीयौ च द्वौ । चत्वारो यमाः संयोगजन्याः । झमि परे झयः परं भवन् वर्णभेदो यमः । रेक्क्णः । मथ्थ्नन् । ग्ग्नाः । घ्घ्नन् इति चत्वारो वेदेषु प्रसिद्धाः । एवं क्षकारवर्जितास्त्रिषष्टिसङ्ख्या वर्णाः, क्षकारस्य संयोगाक्षरत्वात् । ते वर्णाः प्रपञ्चस्योपादानभूताः । तान् प्रसूते सविता वाग्देवतारूपेण । अत्र । शरीरे इत्यर्थः । अध्यात्मे मनुष्यादिदेहे । अधिदैवे च जगत्कारणदेहे इ-त्यर्थः । अत्र वाचीति केचित् । प्रकटकरणैः । प्रकटैः स्पष्टैः स्वव्यापार-वद्भिः स्थानैः । तदुक्तम् —

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥"

इति । प्रकटानि स्वस्वव्यापाराविष्टानि करणानि चेति विग्रहः । भार्या वाक् । भर्तारं दर्शयति — प्राणसङ्गात् । प्राणः सूत्रात्मा चेतनभावः पुरुषः आ-दित्यः, तेन सङ्गात् सम्भोगादिति भावः । प्रसूते जनयति । प्रकृतिपुरुष-संयोगे[2] सर्वमुत्पद्यते इति भावः । तां वक्ष्यमाणामित्यर्थः । प्रथममुदिताम् । प्रथममुद्गताम् । मूलाधारात् प्रथममुद्गताम् । परामिति वाक्यशेषः । वाचश्च[3]-तस्रोऽवस्थाः शिक्षाशास्त्रादौ प्रसिद्धाः । तदभिमानित्वेन तद्रूपत्वेन च स्थितो भगवानिति स्तुतिरैश्वर्यप्रकटनाय । तथाहि —

"चितिप्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
सैषा सारतया चोक्ता हृदयं परमेष्ठिनः ॥"

इति । आगमान्तरेऽपि चोक्तं —

"सूक्ष्मा कुण्डलिनीमध्ये ज्योतिर्मात्रात्यणीयसी ।
अश्रोत्रविषया तस्मादुद्गच्छन्त्यूर्ध्वगामिनी ॥
स्वयम्प्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत् ।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ॥

१. 'ऋमारभ्यौकारान्ता दीर्घप्लुतभेदेन द्वादश । ऋ(लृ)वर्ण(स्य ? योः) दीर्घो न सन्ति । ए' ख. ग. पाठः. २. 'गात्' ग. पाठः. ३. 'चः पञ्चाव' ख. पाठः. ४. 'ता' क. पाठः.

अन्तः संजल्पमात्रा स्यादविभक्तोर्ध्वगामिनी ।
सैवोरःकण्ठतालुस्था शिरोघ्राणद्विजोपगा ॥
जिह्वामूलोष्ठनिष्ठ्यूतकृतवर्णपरिग्रहा ।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ॥"

इति । उक्तं श्रुतौ च —

"चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥"

इति । एवं शब्दत्वेनार्थत्वेन लोकरक्षार्थं भगवानेव विवर्तत इति प्रसिद्धम् । एतदाह — प्रथममुदिताम् । प्रथमोत्पन्नावस्थायाः संज्ञा परेति । पश्चात् स्वाधिष्ठानमणिपूरकाभ्यां संस्पृष्टायाः संज्ञा पश्यन्तीति । ताम् । मध्यमाम् । हृदयमध्ये बुद्धौ प्रविष्टां मध्यमासंज्ञानिर्दिष्टाम् । वक्तुर्विवक्षानुसारेण जायमानामित्यर्थः । वक्त्रे करणसामान्ये पूर्वोक्ते वागिति संज्ञया व्यवहृतामित्यर्थः । करणविशदामिति । करणैरष्टभिः विशदां स्वच्छीभूतां विस्पष्टां वैखरीसंज्ञिताम् । प्रपद्ये शरणं गच्छामि तद्भावं गच्छामि भक्त्यादिबलादिति भावः । प्रथमश्लोकोक्तः शब्दविवर्तः संक्षेपेण प्रपञ्चितः । अद्वितीयत्वमयुक्तं भगवतः प्रकृतेरन्यत्वादिति शङ्कापि निराकृतानेन श्लोकेन ॥ ५ ॥

शब्दविवर्तः प्रपञ्चितः संक्षेपेण । इदानीमर्थविवर्तं दर्शयति श्लोकत्रयेण ।

ऊर्ध्वाधस्तादतनुभुवनान्यन्तरा सन्निविष्टा
नानानाडीप्रसवगहना सर्वभूतान्तरस्था ।
प्राणापानग्रसननिरतैः प्राप्यते ब्रह्मनाडी
सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना ॥ ६ ॥

अस्य श्लोकस्य द्विधा योजना । ज्ञानशक्तिस्तुतिपरत्वेनैका । तथाहि — ऊर्ध्वाधस्तात् मूलाधारादारभ्य ऊर्ध्वदेशं द्वादशान्तं शिरसः मूर्धानं गत्वा । तत्रोपरि द्वादशाङ्गुलमित्यादिदेशेषु यानि भुवनानि भोगभूमयः । कीदृशानि । अतनूनि अपरिच्छिन्नानि भुवनानि भूर्भुवःसुवर्महर्जनस्तपःसत्यपर्यन्तानि देवैरप्यवेद्यानि । अधस्तादिति । मूलाधारमारभ्य

१. 'वागित्यादि । ए', २. 'कयोः सं', ३. 'का ऊ' क. पाठः. ४. 'शो', ५. 'र्ध्नि' ग. पाठः.

पातालान्तानि अतलवितल*नितलसुतलतलातलरसातलपातालशब्दवाच्यानि विराट्पुरुषस्य सर्वप्राणिनां च देहस्थत्वादपरिच्छेद्यानि. तान्यधिकृत्य अन्तरा तेषामन्तरित्यर्थः । सन्निविष्टा सम्यक् प्रविष्टा । देहानां बलहेतुत्वेन स्थितेत्यर्थः । पुनरपि सामर्थ्यमाह — नानानाडीप्रसवगहना । विराट्पुरुषस्य तदन्तःस्थसर्वप्राणिनां च सुषुम्नाद्यनन्ता नाड्यः नाना परस्परविलक्षणाः । ताभिः प्रसवः तत्तच्चक्षुरादिद्वारेण रूपादिभासकत्वेनाभिव्यक्तिः । तस्मिन् निमित्ते गहना अविज्ञेया परमगभीरेति भावः । पुनरपि विद्याख्यासिमाह — सर्वभूतान्तरस्थेति । न केवलं समष्टिदेह एव शक्तेः प्रवेशः किन्तु सर्वभूतानां सर्वप्राणिनामन्तः सूक्ष्मस्थूलदेहेषु वर्तमाना । अस्या ज्ञानशक्तेः सुषुम्नाप्रवेशे मोक्षलाभः स्यात् । स तु योगिनामेव नतु पराकृचित्तानामिति सूचयति — प्राणापानग्रसननिरतैः । देहविधारकौ वायुविशेषौ प्राणापानौ । तयोः ग्रसनं भक्षणं प्राणायामः । तत्र निरतैः तच्छीलैर्महायोगिभिः । प्राप्यते लभ्यते । किम् । ब्रह्मनाडीति सुषुम्नायाः संज्ञा । सा योगिभिः प्राप्यते लभ्यते । यस्याः मूर्तेरनुग्रहात् । सा ज्ञानशक्तिः । नः भक्तानाम् । श्वेता शुद्धा । तामसप्राणिषु वर्तमानापि अलेपकत्वाच्छुद्धेत्यर्थः । परमश्चासावादित्यश्चेति परमादित्यः परमात्मा तस्य मूर्तिः शरीरं सूत्रात्मरूपा । नः प्रसन्ना भवतु अनुग्रहशीला भवतु । इति जीवादित्यस्य प्रपञ्चः । अथवा अविद्यानिवृत्तिः श्लोकेन प्रार्थ्यते । कुण्डलिनी नामाविद्याशक्तिः योगशास्त्रप्रसिद्धा सुषुम्नायां मोक्षमार्गनिरोधिनी । तस्या नाशः सुषुम्नाशुद्धिः । तथाहि — या ब्रह्मनाडी सुषुम्ना सा नः श्वेता शुद्धा भवतु । कुण्डलिनी विनष्टा भवत्वित्यर्थः । एतदुत्तमफलमिति सुषुम्नाज्ञापनाय सुषुम्नाया माहात्म्यं प्रतिपाद्यते । ऊर्ध्वाधस्तादतनुभुवनानीत्यस्य पूर्ववदर्थः । मूलाधारमारभ्य ब्रह्मलोकपर्यन्तं सर्वप्राणिष्वन्तरा सन्निविष्टा देहधारिणीत्यर्थः । नानानाडीप्रसवगहना । अयमर्थः — द्विसप्ततिसहस्राणि नाड्यः प्रतिपुरुषं वर्तन्ते । तासां प्रसव उत्पत्तिः सुषुम्नाबलेन तन्मूलत्वात् ।

१. 'साधकं'. २. 'क्तिः प्रसवः । त', ३. 'पि व्या', ४. 'ते । य' ख. पाठः. ५. 'स्याः प्रसादात् सा' क. पाठः. ६. 'सा शक्तिः श्वेता शुद्धा नः अस्माकं भवतु । पर' ख. पाठः. ७. 'त्तिश्लोके आदित्यः परमात्मा न प्रा' क. पाठः.

* इदमप्रसिद्धम् ।

यथा वृक्षस्य शङ्कोः सर्वशाखानामुत्पत्तिः एवं सुषुम्नातः सर्वनाडीनामुत्पत्तिः । तदुक्तं "द्विसप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतितिष्ठन्ते" इति । योगशास्त्रे च मूलाधारादारभ्य सत्यलोकपर्यन्तं वेणुदण्डवदवस्थिता सुषुम्नेति प्रसिद्धम् । एवंविधनाडीनामुत्पत्तिहेतुत्वाद् गहना अविद्या सूक्ष्मेत्यर्थः । पुनरपि सामर्थ्यमाह — सर्वभूतान्तरस्था । स्वेदजोद्भिज्जाण्डजजरायुजानि सर्वभूतानि । तेषां देहानामन्तः सूक्ष्मशरीरस्थितिहेतुत्वेनावस्थिता सर्वगतेति भावः । इतश्च दिव्या सुषुम्नेत्याह — प्राणापानग्रसननिरतैः योगिभिरेव प्राप्यते गम्यते । सुषुम्नायां प्रवेशः समाधिनिष्ठानामेव लभ्यत इत्यर्थः मोक्षमार्गत्वात् । या एवंविधा ब्रह्मप्राप्तिसाधनत्वाद् ब्रह्मनाडी सुषुम्ना सा नः अस्माकं स्तुतिशीलानां सूर्यभक्तानामित्यर्थः । श्वेता शुद्धा भवतु कुण्डलिनीनिमित्तमशुद्धा पूर्वम् इदानीं तस्या नाशेन अविद्यानाशेन शुद्धा भवतु । केन शुद्धिरिति तत्राह — परमादित्यमूर्तिः प्रसन्नेति । परमादित्यो जगत्कारणं ब्रह्म । तस्य मूर्तिर्लिङ्गात्मा सविता । तेन तन्निमित्तम् । प्रसन्ना । रजस्तमोनिमित्तं कालुष्यं चित्ते । भगवत्स्वरूपेण तन्नाशेन ब्रह्मविद्योत्पत्त्या प्रसन्ना श्वेता भवतु ॥ ६ ॥

नाडीशुद्धिप्रार्थनाच्छलेनाविद्यानाशनिमित्तं ज्ञानक्रियाशक्तिरूपेण च सूक्ष्मं भगवतः स्वरूपमुक्तम् । तदेव स्थूलरूपेण लोकानां प्रत्यक्षं, सूक्ष्मरूपेण जगतो विधरणहेतुः जगत्कारणरूपत्वादिति स्तौति — यत्रारूढमिति । अथवा नाडीशुद्धिप्रार्थनाच्छलेन मूलाविद्या नश्य(तामि?त्वि)त्युक्तम् । ननु जगत्कारणस्यादित्यमूर्तेर्नभःस्थत्वात् तज्ज्ञानस्य जीवगताविद्यानाशकत्वमयुक्तं व्यवधानादित्याशङ्क्याह —

यत्रारूढं त्रिगुणवपुषि ब्रह्म तद् बिन्दुरूपं
योगीन्द्राणां यदपि परमं भाति निर्वाणमार्गः ।
त्रय्याधारः प्रणव इति यन्मण्डलं चण्डरश्मे-
रन्तः सूक्ष्मं बहिरपि बृहन्मुक्तये तत् प्रपद्ये ॥ ७ ॥

अध्यात्मेऽधिदैवे चावस्थितत्वाद् भगवतो मोक्षहेतुत्वं सम्भवतीति प्रतिपाद्यते । यत्र सर्वज्ञे अव्याकृते जगत्कारण इत्यर्थः । आरूढं

---

१. 'णि पु', २. 'वर्तन्ते' क. पाठः. ३. 'र्वब्रह्मान्तानि'. ४. 'तः सविते' ख. पाठः.

प्रविष्टं वृक्षाग्रे पुष्पादिवत्[1] तत्कार्यत्वात् । कीदृशे । त्रिगुणवपुषि । सत्त्वं रजस्तमश्च मूलप्रकृतिः सा वपुः शरीरं यस्य[2] कारणस्य तत् तथोक्तम्[3] । ब्रह्म तद् आगमप्रसिद्धं शब्दब्रह्मेत्यर्थः । विन्दुरूपं प्रणवस्य[4] सूक्ष्मावस्था सर्ववेदानां बीजभूता विन्दुर्नादः इत्यादिशब्दवाच्या कथ्यते विन्दुरिति । पुनरपि विशिनष्टि — योगीन्द्राणां सनकादीनां यद् आदित्यमण्डलं परमं भाति मोक्षप्राप्तिकाले सहस्रादित्यवत् प्रकाशरूपेण भाति । अत्र हेतुः — निर्वाणमार्ग इति । द्विविधा योगिनः मध्यमाः उत्तमाश्च । तत्रोत्तमानामिहैव हृदये ब्रह्माकारेण परिणतबुद्धिवृत्तौ मार्गवद् भाति । मध्यमानामर्चिरादिद्वारेण ब्रह्मलोकपर्यन्तं भाति मार्ग इत्यर्थः । प्रकारान्तरेण मण्डलस्य प्रसिद्धिमाह — त्र्य्याधारः प्रणव इति । सर्वो वेदस्त्रयीति विवक्षितः । तस्या आधारः आश्रयः कारणभूतः प्रणवः सर्ववेदानां प्रणवकार्यत्वात् । ऋग्वेदः अकारस्य कार्यम् उकारस्य यजुर्मकारस्य साम । इतिशब्दः प्रकारवाची । यदादित्यस्य सूक्ष्ममण्डलं प्रणव इति कथ्यते । विद्वद्भिरिति वाक्यशेषः । प्रसिद्धमिति वा । चण्डरश्मेरिति[5] । चण्डास्तीक्ष्णाः जगत्संहारादिषु समर्था रश्मयो यस्य स चण्डरश्मिः । तस्य पुनरपि सामर्थ्यमाह— अन्तः । सर्वप्राणिनामन्तःकरणे । सूक्ष्मं करणागोचरं द्रव्यान्तरेण प्रतिहत्ययोग्यं वा । सर्वगतमिति भावः । वहिः आकाशे । बृहत् स्थूलं परिच्छिन्नं चाणिमादिबलाच्चक्षुर्गोचरमिति भावः । मुक्तये अविद्यानाशायेत्यर्थः । प्रपद्ये एकत्वेन स्मरामीत्यर्थः । यस्मात् त्वमुभयरूपेण लोकान् पासि तस्मात् त्वत्सदृशो देवो नास्तीति विद्यमानगुणकीर्तनं स्तुतिः ॥ ७ ॥

मण्डलप्रसङ्गेनाति[6]सूक्ष्मं भगवतो रूपमानन्दं प्रह्वीकरोति

यस्मिन् सोमः सुरपितृनरैरन्वहं पीयमानः
क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः ।
यस्मिन् वेदा मधुनि सरघाकारवद् भान्ति चाग्रे
तच्चण्डांशोरमृतममितं मण्डलस्थं प्रपद्ये ॥ ८ ॥

---

१. 'त् । की', २. 'मोगुणः वपुः शरीरमिव श' ख. पाठः. ३. 'स्य त', ४. 'स्योत्तराव', ५. 'च्दप्रसिद्धम् । पु' क. पाठः. ६. 'न तत्रस्थमति' ग. पाठः.

चण्डांशोर्मण्डलस्थममृतमिति प्रतिज्ञा । अत्र हेतुः —यस्मिन्नादित्य-मण्डले सोमः चन्द्रः अमृतरूपः क्षीणः क्षीणः लीनदेहः स्वरूपलाभार्थं प्रविशति । किमिति स्वरूपनाशः । आह — सुरपितृनरैः देवपितृमनुष्यै-रित्यर्थः । अन्वहं प्रतिदिवसमित्यर्थः । पीयमानः भक्ष्यमाण इत्यर्थः । अपरपक्षप्रतिपदमारभ्य पञ्चदिवसं देवाश्चन्द्रं भक्षयन्ति । पञ्चदिवसं पितरः । पञ्चदिवसमृषयो मनुष्याः भक्षयन्तीति पुराणादौ सिद्धम् । (इष्टि ? ऋषि)-ष्वपि नरशब्दो वर्तते । तस्मात् । क्षीणः क्षीण इति वीप्सा सर्वकालं प्रवेश-सूचनाय । यस्मादमृतलाभार्थमादित्यमण्डले चन्द्रः प्रविशति, तस्मात् तत्रा-मृतं लोकरक्षाकारणमस्तीति भावः । इतश्चामृतमस्तीत्याह — यत इति । अमृतं विनापि तापशान्त्यै चन्द्रप्रवेश इत्याशङ्क्य वा हेतुः यतो वर्धत इति । आदित्यमण्डलं प्रविष्टस्य चन्द्रस्य उदरपूरणं प्रत्यक्षं वृद्धिदर्शनात् । तस्मात् तत्रामृतमस्तीति भावः । भूयः भूयोभूयः । पुनःपुनर्वर्धत इत्यर्थः । क्षीणः क्षीण इति वीप्सादर्शनात् । इतश्च तत्रामृतमस्तीत्याह — यस्मिन् आदित्यमण्डले । वेदाः सर्वे । वेदानां दिव्यशरीराणीत्यर्थः । मधुनि लोके वृक्षशाखायां मधुकरैः स्थापितमध्वपूप इत्यर्थः । सरघाः मधुमक्षिकाः । तेषामाकारवद् भान्ति विदुषाम् । वेदमूर्तेश्च प्रत्यक्ष(त्व)मित्यर्थः । अग्रे वेद-स्याग्रे, शिरसि, आरुणे छन्दोगश्रुतावित्यर्थः । 'असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः तस्य ये प्राञ्चो रश्मयः ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पमि'त्या-दिना प्राग्भागे सवितृमण्डलस्य मध्वाश्रयत्वम् , एवं दक्षिणभागे यजूरश्मि-मधुनाड्यादि द्रष्टव्यम्, पश्चिमभागे सामानि मधुकृतः । उत्तरभागेऽथर्ववेदः । उपरिभागे गुह्या आदेशा मधुकृत इत्यादिना मधुरूपत्वमादित्यस्य प्रतिपा-दितं मधुविद्यायाम् । मधुशब्दो मधुविषयः । अमृतविषय इह गुणसाम्येन निर्देशः । यस्माच्छाखामधुमक्षिकादि सर्वमादित्यमण्डलेऽस्तीति वेदेनोक्तं, तस्मान्मण्डले अमृतमस्तीत्यर्थः । फलितमाह — तदिति । अमृतमित्यर्थः । चण्डाः भयङ्करा अंशवो रश्मयो यस्य स चण्डांशुः तस्य अमृतं मधुरसमा-नन्दहेतुं सर्वप्राणिनां चित्ते । तर्हि अनित्यं सुखमित्याशङ्क्य नेत्याह —

१. 'ष्यैः अ' ख. पाठः २. 'द्धम् । त' ग. पाठः. ३. '(द ? दा)हशा' क. पाठः. ४. 'करभ्रमरैः' ख. पाठः. ५. 'लस्थम', ६. 'र्हि जन्यं सु' क. पाठः.

अमितमिति । मितं परिच्छिन्नं विषयसुखं, तन्न भवतीत्यमितं परिपूर्णम् । देशतः कालतो वस्तुतश्च परिच्छेदरहितं ब्रह्मानन्दमिति भावः । मण्डले स्थितं मण्डलस्थम् । स्थूलं मण्डलं प्रत्यक्षं विराडादित्यस्य चक्षुः । सूक्ष्मं मण्डलमव्याकृतं त्रिगुणवपुः । उभयत्र प्रतिबिम्बरूपेण शास्त्रेण प्रतिपादनाद् मण्डलस्थमिति कथ्यते । वस्तुतः पूर्णमेव 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतेः । तत् प्राप्तानां मरणं नास्तीत्यमृतम् । एतत् प्रपद्ये । यथाशक्ति गच्छामीत्यर्थः । आदित्यस्तुताविहलोकसुखं मोक्षसुखं च लभ्यत इति विद्यमानगुणकीर्तनं स्तुतिः ॥ ८ ॥

भगवत आनन्दरूपत्वमुक्तम् । इदानीं भगवत्स्वरूपप्रदर्शनपूर्वकं कर्वानां प्रक्रिया-मनुसरति मुखतः । तत्रादित्यं वामनेन विष्णुना (सर्वश्लेषया ? ) रूपयति । अर्थादेकत्वं चा-दित्यस्य जीवस्य विष्णुना दर्शयति —

ऐन्द्रीमाशां पृथुकवपुषा पूरयित्वा क्रमेण
क्रान्ताः सप्त प्रकटहरिणा येन पादेन लोकाः ।
कृत्वा ध्वान्तं विगलितबलिव्यक्ति पाताललीनं
विश्वालोकः स जयति रविः स त्वमेवोर्ध्वरश्मिः ॥ ९ ॥

द्विधा योजना । ऐन्द्रीम् इन्द्रसम्बन्धिनीम् । आशां पूर्वां दिशम् । पृथुकवपुषा बालरूपेण । पूरयित्वा परिपूर्णत्वेन प्रकाशीकृत्य । क्रमेण । दक्षिणां पश्चिमाम् ऊर्ध्वामित्यादिक्रमः । क्रान्ताः आक्रान्ताः व्याप्ताः । सप्त भूरादिसत्यलोकान्ताः । प्रकटहरिणा प्रकटं तमो[1] हरतीति प्रकटहरिः । अथवा प्रकटाः प्रकाशरूपाः हरयः अश्वाः यस्य सवितुः सः प्रकटहरिः । येन व्यापनकर्त्रा । पादेन रश्मिना । जातौ पादशब्दः । रश्मिभिरित्यर्थः । सप्त लोका उक्ताः । कथमिव । कृत्वा विधाय । ध्वान्तं बाह्यं तम इत्यर्थः । किंलक्षणम् । विगलितबलिव्यक्ति । विशेषेण गलिता विनष्टा बलिनी त्रैलो-क्यस्य व्यक्तिरभिव्यक्ति[2]र्येन[3] ध्वान्तेन तद् विगलितबलिव्यक्ति । पाताल-लीनं पाताले गुहायां लीनं विनष्टमिव । ध्वान्तं पाताललीनं भवति यथा

१. 'मो नाशयती', २. 'क्तिः प्रकाशो येन' ग. पाठः. ३. 'न तत् तथोक्तं ध्वान्तं मः । पा' ख. ग. पाठः.

तथा कृत्वेति क्रियाविशेषणम् । विश्वालोकः विश्वस्य प्रपञ्चस्य आलोकः प्रकाशकः दीपादिवत् । स रविः सविता । जयति सर्वस्मादुपरि वर्तते, भजनशीलानामभिमतं साधयतीति भावः । स त्वमिति विष्णुस्तदुपाधित्वा-ल्लक्षितो वामनः । स इव स त्वम् । आ इवेति पदच्छेदः । आक्रान्ता इत्य-त्राङः सम्बन्धः । ऊर्ध्वरश्मिः ऊर्ध्वं कारणब्रह्म तदेव रश्मिस्थानीया भाः यस्य स ऊर्ध्वरश्मिः । अथवा ऊर्ध्वदेशे ब्रह्मलोकादौ रश्मिः प्रकाशो यस्य स ऊर्ध्वरश्मिः । वामनेन साम्यमिदम् — ऐन्द्रीम् इन्द्रसम्बन्धिनीम् आशां श्रद्धाम् । त्रैलोक्यं कदानु ददाति भगवान् बलिनापहृतमिति पुरन्दर-स्याशा तामित्यर्थः । पृथुकवपुषा बटुवामनरूपेण । पूरयित्वा सफलां कृत्वा । क्रमेण पादविक्षेपेण । अथवा भूर्लोकादिक्रमेण प्रथमं भूः द्वितीयं भुवः इत्यादि(ना) क्रान्ताः आक्रान्ताः लङ्घिताः परिमाणीकृता इत्यर्थः । सप्त-सङ्ख्याका लोकाः । यद्यपि वामनस्य त्रिलोकलङ्घनं प्रसिद्धं, तथापि त्रैलो-क्यशब्दस्य महाव्याहृतिवत् सर्वलोकविषयत्वात् तस्मिन्नन्तर्भूताः सप्त लोका अवयवास्त्रैलोक्यस्य । तदुक्तं पुराणे— 'वामनस्यैकः पादो ब्रह्मलोकं गतः । तत्र चतुर्मुखेन क्षालनकाले गङ्गा निष्पन्ने'ति । तस्मान्न सप्तसंख्याविरोधः । प्रकटहरिणा । प्रकटं स्पष्टीकृतं हरिरेवायं प्रच्छन्नो बटुरिति प्रसिद्धिर्यस्य सः प्रकटहरिः । वामनस्य शङ्खचक्रसहस्रबाहुत्वादेर्विक्रमकाले दर्शनात् प्रकट-त्वम् । प्रकटश्चासौ हरिश्चेति प्रकटहरिः । अथवा प्रकटमुदारं दैत्यसागरं महाबलेस्तत्क्षणेन हरति संहरति इति प्रकटहरिः वामनः । येन वामनेन । पादेन चरणेन । एकः पादो भूमौ तिष्ठति । इतरो ब्रह्मलोकं गच्छति । कथमिवाक्रान्ताः, आह — कृत्वा विधाय । ध्वान्तं तमः । तम इति तम-उपाधिर्दैत्यो लक्षितः । तं कीदृग्भूतम् । आह — विगलितबलिव्यक्ति । विशेषेण गलिता विनष्टा बलिर्महाबलिरिति व्यक्तिः ख्यातिः यस्य बलेः स तथोक्तः । अथवा क्रियाविशेषणम् । पाताललीनं पाताले महागुहायां लीनं तदाश्रयं कृत्वेति सम्बन्धः । विश्वालोकः । विश्वैः सर्वैः विक्रमकाल आलोक्यत इति विश्वालोकः । अथवा विश्वस्यालोकतुल्यो विश्वालोकः विष्णुः । स जयति परिपालयति । ऊर्ध्वरश्मिः । रश्मिशब्देन पादो लक्षितः । ऊर्ध्वपाद इत्युक्तम् । एवं वामनेन तुल्यत्वात् स त्वमेवेति स्तुतिः ।

---

१. 'ति इति भावः स' ख. पाठः. २. 'ते स' क. पाठः. ३ 'तिशब्दवत्' ख. ग. पाठः. ४. 'र्व' ग. पाठः.

अथवा मोक्षप्रदेन परमात्मना भेदाभावात् त्वमेव परमात्मेति विद्यमानगुणकीर्तनं स्तुतिः । तथाहि बुद्धावभिव्यक्तः परमात्मा यथा वर्तते तथा दर्शयिष्यामः । ऐन्द्रीमिन्द्रस्य यजमानस्य साधकस्य मुमुक्षोः आशां प्रार्थनाम् । कदानु खलु दुःखसंमुद्रात् संसारान्मोक्षं गच्छामीत्याशा । ताम् । पृथुकवपुषा वालरूपेण वेदान्तवाक्याज्जनितेन कोमलाङ्कुरतुल्येन ज्ञानेन ब्रह्माकारेण वर्तमानेन । पूरयित्वा आशामिति सम्बन्धः । अविद्यानाशनं क्रमेण कृत्वा । उचितमार्गेण प्रथमं श्रवणं कारयित्वा पुनर्मननं, पुनर्निदिध्यासनं, पुनः प्रतिबन्धनिवृत्तिः, पुनरविद्यानिवृत्तिः, पुनः स्वात्मन्यवस्थानं चेति क्रमः । तेन क्रमेण आशां पूरयित्वा । क्रान्ताः व्याप्ताः । बुद्धिवृत्तिर्यत्र यत्र गच्छति तत्र तदारूढो गच्छति परमात्मा । अयसि यत्र यत्राग्निव्याप्तिस्तत्र तत्र तस्य कार्ष्ण्यं नश्यति, एवं परमात्मव्याप्त्या जाड्यं विनश्यति सप्तलोकानामाध्यात्मिकानां वाह्यानां चेति भावः । प्रकटहरिणा प्रकटमपरोक्षीकृतं मोहं द्वैतं हरतीति प्रकटहरिः । अथवा प्रकटश्चासौ हरिश्चेति प्रकटहरिः अपरोक्षत्वात् तेन । पादेन प्रणवस्य चतुर्थपादेन तुरीयरूपेण । लोकाः जाग्रत्स्वप्नसुषुप्तिलक्षणाः । सप्त लोकाः भूरादयश्च तेष्वन्तर्भूताः । कथमिवाक्रान्ता इति तत्राह — कृत्वा प्रयत्नमुत्पाद्य । ध्वान्तं भावरूपाज्ञानमित्यर्थः । किंलक्षणं ध्वान्तम् । विगलितबलिव्यक्ति । विशेषेण गलिता विनष्टा तिरोभूता बलवती व्यक्तिः मुक्तिः येन ध्वान्तेन अज्ञानेन तद् विगलितबलिव्यक्ति । ध्वान्तं तत् पाताललीनं विनष्टं कृत्वेत्यर्थः । विश्वस्य जीवस्य आलोकः पारमार्थिकरूपः प्रकाशकः संज्ञातावस्थः परमात्मा । जयति पञ्च क्लेशान् नाशयति, सर्वस्मादुपरि वर्तते । अथवा विश्वतैजसप्राज्ञानामालोकः भासकः परमात्मा यस्मात् तस्मात् क्लेशान् जयति । स्वभक्तानामारम्भान् सफलयतीति वा । अथवा रविवद् रविः करुणानिमित्तं लोकसुखहेतुत्वात् । सर्वं रक्षति सविता, तद्वत् परमात्मापि । अथवा भ्रान्तोऽहमविद्यमानभेदप्रतिपत्तेः । आदित्यपरमात्मनोरणुमात्रोऽपि भेदो नास्तीति श्रुतयः । न्यायाच्च । तस्मात् हे भगवन्! त्वं स एव । मोक्ष-

---

१. 'समुदायात्', २. 'लकण्ठकतु' ख. ग. पाठः. ३. 'मूर्तिर्येन' क. पाठः.
४. 'कः य' ख. पाठः. ५. 'अतो र'. ६. 'रविः', ७. 'तं न्या' क. पाठः.

प्रदः विष्णुरेवेत्यर्थः । ऊर्ध्वरश्मिः । ऊर्ध्वं संसारादुपरि स्थितं निर्गुणं ब्रह्म । तस्मिन् रश्मिवद् ज्ञानं यस्य स ऊर्ध्वरश्मिः । सर्वदा प्रत्यग्दृष्टिरिति भावः ॥ ९ ॥

सगुणरूपेण निर्गुणरूपेण च वर्तते सवितेत्युक्तम् । तस्य ब्रह्माकारबुद्धावभिव्यक्तस्याविद्यानिवर्तकस्य भर्गशब्दवाच्यत्वं गायत्रीमन्त्रे प्रसिद्धम् । तेन स्तुतिः क्रियते[1] —

ध्यात्वा ब्रह्म प्रथममतनु प्राणमूले नदत् तद्
दृष्ट्वा चान्तः प्रणवमुखरं व्याहृतीः सम्यगुक्त्वा ।
यत् तद् वेदे तदिति सवितुर्ब्रह्मणोक्तं वरेण्यं
तद् भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये ॥ १० ॥

अत्र अपरोक्षत्वेन मुमुक्षुणा अविद्ययाज्ञातावस्थं ब्रह्म गायत्र्याः प्रधानरूपं भर्गशब्दलक्ष्यमादित्यस्य स्वरूपं स्तौति गायत्रीजपस्य किञ्चिदितिकर्तव्यतां च दर्शयति । ध्यात्वा चिन्तयित्वा । ब्रह्म निर्गुणमित्यर्थः । प्रथमं जपस्योपक्रमकाल इत्यर्थः । अतनु । तनुः सूक्ष्मस्थूलशरीरं तत् कालत्रये यस्य नास्ति तदतनु । प्राणमूले प्राणस्य देहवर्तिनः सूत्रात्मनः मूले मूलाधार इत्यर्थः । अथवा प्राणस्य सूत्रात्मनो मूलं कारणं निर्गुणं[2] ब्रह्म । तदुक्तं श्रुतौ 'आत्मन एव प्राणो जायते' इत्यादौ । तत्र नदत् नादलक्षणं शब्दं कुर्वत् । तद्रूपेण विवर्तितमित्यर्थः । तदिति विवर्तहेतुरेवेत्यर्थः । दृष्ट्वा निश्चित्य । आचार्योपदेशेन यत् सर्वगतं परं ब्रह्म तदेव गायत्रीमन्त्ररूपेण मम हृदये वर्तते इति निश्चित्येत्यर्थः । (अन्तः) देहस्यान्तः । अन्तः प्राणमूल इति सम्बन्धः । प्रणवमुखरं प्रणवोच्चारणपूर्वकमित्यर्थः । व्याहृतीः महाव्याहृतीः भूर्भुवस्सुवरिति मन्त्रस्थाः । ताः सम्यग् उदात्तादिलक्षणयुक्तम् । क्रियाविशेषणं सम्यगिति । उक्त्वा उच्चार्य । यत्तदिति सर्ववेदान्ते प्रसिद्धं ब्रह्मेत्यर्थः । वेदे वेदैकदेशे बृहदारण्यके गायत्रीब्राह्मण इत्यर्थः । अथवा सर्वत्र गायत्रीमन्त्रस्यादिपदं गृह्णाति तदिति । इतिशब्दः प्रकारवाची । तत् सवितुर्वरेण्यमिति क्रमेणेत्यर्थः । उपलक्षणन्यायेन मन्त्रः सर्वोऽपि गृहीतः । अयमर्थः — गायत्रीमन्त्रस्यादिपदेन यद् भर्गाख्यं ब्रह्मोक्तं तदिति । सवितुः सर्वस्य जगतः प्रसवहेतोरादित्यस्य पारमार्थिकं रूपमित्यर्थः । ब्रह्मणा चतु-

१. 'तिः— ध्या' ख. ग. पाठः २. 'णं त' ख. पाठः.

मुखेन । अथवा ब्राह्मणजात्या । अथवा गायत्रीब्राह्मणवाक्येनेत्यर्थः । उक्तं जपकाल उच्चारितम् । वरेण्यं वरणीयं प्रार्थनीयं धर्मार्थकाममोक्षार्थं व्याधिदारिद्र्यादिनिवृत्त्यर्थं च । तच्छब्दार्थं विशिनष्टि । भर्गाख्यम् । भर्ग इत्याख्या वाचकं पदं यस्य तत् भर्गाख्यम् । भजनशीलानां पापादीनामविद्यातत्कार्याणां च भर्जनाद् दहनात् भर्गशब्दवाच्यत्वं सवितुः । ब्रह्मज्ञानेन ज्ञातावस्थायां बुद्धिस्थस्य नाम भर्ग इति भावः । कीदृशम् । किमपि परमं धामगर्भम् । किमपि वाङ्मनसयोरगोचरम् । परमं सर्वानर्थशून्यं निरतिशयानन्दं चेति भावः । धामगर्भं धाम्नां तेजसाम् आदित्यमण्डलचन्द्रतारकाग्निविद्युदादीनां गर्भं कारणं सारभूतमित्यर्थः । तदुक्तं — 'तस्य भासा सर्वमिदं विभाती'ति । प्रपद्ये तदेकत्वमनुभवामि । प्रथममतनु ब्रह्म ध्यात्वा पुनरन्तः प्राणमूले तदेव नदद् दृष्ट्वा प्रणवमुखरं व्याहृतीश्च सम्यगुक्त्वा यत् तद् वेदे ब्रह्मणा तदित्युक्तं तत् सवितुर्वरेण्यं भर्गाख्यं किमपि परमं धामगर्भं प्रपद्ये इति योजना । यत् प्राणिनां निरतिशयमोक्षसाधनं तत् सवितुः स्वरूपमिति गुणकीर्तनं स्तुतिः ॥ १० ॥

तं स्तोष्यामि स्तुतिभिरिति मे यस्तु भेदग्रहोऽयं
सैवाविद्या तदपि सुतरां तद्व्युदासाय युक्तः ।
स्तौम्येवाहं त्रिविधमुदितं स्थूलसूक्ष्मं परं वा
वेद्योपायः पर इति बुधैर्गीयते स्वल्पविद्या ॥ ११ ॥

अतीता दश श्लोकाः कृष्णेन कृता इति सम्प्रदायः । एवं वा भवतु । इदानीं स्तोतुं प्रवृत्तः साम्ब आत्मनिन्दां करोति श्लोकस्य पादेन । तमिति, भगवता स्तुतमित्यर्थः । अथवा तं स्तुतिभिः स्तोष्यामीति कर्तृकर्मादिभेदग्रहः । मे साम्बस्येत्यर्थः । भेदग्रहः अद्वितीये ब्रह्मणि कर्त्रादिभेदग्रहोऽयं मिथ्याप्रत्ययः । सैव अविद्येति विशेष्यानुसारेण स्त्रीलिङ्गनिर्देशः । अतस्मिंस्तद्बुद्धिरविद्या । तर्हि प्रणव एव विस्वरः इति नेत्याह — तदपि अज्ञानमपि । भेदज्ञानमपि । सुतराम् । शास्त्र(गुरु)शिष्यादिभेदज्ञानमप्यविद्यानिवृत्तौ साधनम् । अविद्यात्वेन ज्ञाते शीघ्रं नश्यतीति (तरप्) प्रत्ययार्थः ।

---

१. 'स्त', २. 'त्यर्थः । धा' ख. पाठः. ३. 'म्नां मण्डलानाम् आ' क. पाठः.

तत् तस्या व्युदसनं निरासः तदर्थं युक्तः उपपन्नः। एकत्वज्ञाने भेदो नश्यतीत्यर्थः। यस्मादेवं तस्मात् स्तौम्येव। एवं विस्वरप्रसङ्गाभावात् स्तौम्येव स्तुतिं करिष्याम्येव। एवकारार्थ आत्मनिन्दायां स्तुतिं न करिष्यामीति प्रत्ययनिवृत्तिः। अहं भेदज्ञान्यपि। इतश्च स्तुतिः शक्येत्याह — त्रिविधमुदितम्। सर्वात्मकम्। किं तत्। स्थूलं सूक्ष्मं परं वेति। सर्वरूपेण तिष्ठति सविता, अतो यद्यद् वदामि तत् तत् स्खलितमपि भगवद्रूपे पतति सेनामध्यपतितबाणवत्। अतो मन्दानामपि वचनं तत्र सत्यं भवतीति भावः। चार्थे वाशब्दः। वेद्यस्य ब्रह्मण उपायः। उप समीपे गच्छत्यनेनेत्युपायः। परउत्तमः। इतिशब्दः प्रकारे। बुधैर्ज्ञानिभिर्गीयते पठ्यते खलु। आगमोऽप्यत्र प्रमाणं प्रसिद्धमिति भावः। अविद्या शास्त्रगुरुशिष्यादिभेदज्ञानमविद्येत्यर्थः। 'तमसस्पारं दर्शयति (भगवान्) सनत्कुमारः' इत्यादि शास्त्रं गुर्वादिभेदस्याविद्यात्वं, ज्ञानस्य तन्नाशकत्वं च दर्शयतीति भावः॥ ११॥

त्रिविधमुदितं विवृणोति —

योऽनाद्यन्तोऽप्यतनुरगुणोऽणोरणीयान् महीयान्
विश्वाकारः सगुण इति वा कल्पनाकल्पिताङ्गः।
नानाभूतप्रकृतिविकृतीर्दर्शयन् भाति यो त्वां
तस्मै तस्मै भवतु परमादित्य! नित्यं नमस्ते॥ १२॥

स्थूलं सूक्ष्मं परं चेति त्रिविधम्। तत्र परं यः प्रसिद्धः श्रुतौ विदुषां च। स्वप्रकाश इत्यर्थः। आदिश्चान्तश्चाद्यन्तौ तौ यस्य न सम्भवतः सोऽनाद्यन्तः। तौ यस्य परस्य कालत्रयेऽपि न स्तः सोऽनाद्यन्तः। अतनुः। देहद्वयशून्य इत्युक्तम्। अगुणः सर्वज्ञत्वसर्वकर्तृत्वादिः संयोगादिश्च गुणो यस्य न विद्यते सोऽगुणः। कथं तर्हि सत्यत्वमित्यत्राह — अणोरणीयान् महतो महीयानिति। मनुष्यादिसूक्ष्मप्राणिषु समासवद् भाति उपाधिवशात्। तस्मादणुः परः। महत्तमप्राणिषु हिरण्यगर्भादिषु च समासवद् भाति। अतो महतो महीयानुपाधितः वृद्धतमः। एवम् 'अणोरणीयानि'त्यादिवेदेनोक्तत्वात् परं सत्यमित्यर्थः। इदानीं स्थूलं दर्शयति — विश्वाकारः प्रपञ्चाकारः। यस्य सवितुः मायया स्वरूपवद् भाति विश्वं स विश्वाकारः। सगुणः सर्वज्ञत्वादिगुणवानित्यर्थः। अरुचिसूचनाय वाशब्दः। कल्पना अज्ञानिनामारोप इत्यर्थः। तेन कल्पिताङ्गः ऐश्वर्यवशात् सर्वदेहग्रहणे

शक्तिमानादित्य इत्यर्थः। इदानीं सूक्ष्मं दर्शयति—नानाभूतप्रकृतिविकृतीः। नानाभूताः परस्परविलक्षणाः प्रकृतयः कारणानि अव्याकृतमहदहङ्कारपञ्चभूतानीत्यर्थः। महानव्याकृतस्य विकृतिः अहङ्कारस्य प्रकृतिश्च। स एक एव। एवमहङ्कारोऽपि मध्यमपञ्चभूतानां प्रकृतिः महतो विकृतिः। एवं पिपीलिकादौ चतुर्विंशतितत्त्वानि पृथक् पृथग् दर्शयति सविता। तस्मात् सूक्ष्मः सर्वकारणत्वादित्यर्थः। तस्मै तस्मै इति वीप्सा। स्थूलाय सूक्ष्माय पराय सर्वत्र नमो भवतु। हे परमादित्य! एवंविधाय ते नित्यं नमो भवतु। अर्थविवर्तः प्रपञ्चितः श्लोकेन। जाग्रत्स्वप्नसुषुप्तितुरीयविषयत्वं भगवतोऽस्तीति गुणकीर्तनं स्तुतिः ॥ १२ ॥

तत्र तुरीयं दर्शयति

तत्त्वाख्याने त्वयि मुनिजना नेतिनेति ब्रुवन्तः
श्रान्ताः सम्यक् त्वमिति नच तैरीदृशो वेति चोक्तः।
तस्मात् तुभ्यं नम इति वचोमात्रमेवाभिवच्मि
प्रायो यस्मात् प्रभवति परा भारती ज्ञानगर्भा ॥ १३ ॥

तत्त्वम्। सर्वदा बाधारहितं तत्त्वावेदकप्रमाणसिद्धं निर्विशेषं परमगम्भीरं (षष्ठी ?) गुणक्रियाजातिरूढीनामयोग्यं तत्त्वम्। तस्याख्यानं निर्देशः इदमित्थमिति निर्वचनम्। तस्मिन्नित्यर्थः। त्वयि विषयसप्तमी। त्वां प्रति। मुनिजना मननशीलाः कवयः। श्रान्ताः श्रमं क्लेशं कृतवन्तः। कथमिव। नेति नेति ब्रुवन्तः। नेतिनेतीति वीप्सा। तामभिवदन्तः स्थूलं न अणुर्न ह्रस्वं न इत्यादि ब्रुवन्तः श्रान्ताः। 'अस्थूलमि'त्यादिश्रुतेः। तर्हि वाच्यत्वमपि तैः कृतमिति, नेत्याह— सम्यक्। मुख्यवृत्त्या वाच्यत्वेन। निर्गुण इत्यर्थः। नच तैस्त्वं सम्यगुक्त इत्यन्वयः। तैर्मुनिभिः। त्वं परमात्मा आदित्यः। सम्यग् वाच्यवाचकभावेन। नोक्तः न निर्दिष्टः। तर्हि तुच्छ इति, नेत्याह—ईदृशो वा। लक्षणावृत्त्या ईदृश एव सर्वव्यवहारातीतः। प्रत्यग्रूप इति लक्षणावृत्त्या निर्दिष्टः। वाशब्दो गुणवृत्तिसूचकः। न तुच्छ इत्यर्थः। वाशब्द एवकारार्थे वा। तर्हि

१. 'तादिम', २. 'यत्वं भगवद्गुण' ख. ग. पाठः. ३. 'ति — तत्त्वाख्यान इति। ननु विकल्पं विना तत्त्वमेव प्रतिपाद्य स्तूयतामिति, नेत्याह —' ख. पाठः. ४. 'मपि, ने' क. पाठः.

स्तुत्या किमिति, तत्राह — तस्मात् । यस्मान्मुनिभिरपि न वाच्यत्वं तव, तस्मात् कारणात् । तुभ्यं भगवते नम इति वचोमात्रमेवाभिरचित । न विशेषं वदामि । तर्हि व्यर्था स्तुतिरिति, नेत्याह — प्रायः प्रायोवृत्त्या । नतु नियमेन । यस्मात् कारणात् त्वं महागुणानां निधिस्तस्मात् प्रभवति परा भारती सत्यवाणी श्रद्धाभक्तिभ्यामीर्यमाणा । ज्ञानगर्भा । ज्ञानं ब्रह्मविषयं गर्भे यस्यां वाण्यामन्तर्भवति शनैर्जायते सा ज्ञानगर्भा । यथाशक्ति चेष्टायामपि घृणानिमित्तं ज्ञानं ददाति भगवानिति भावः । अस्यार्थं 'यत् तद् वेद्यमि'त्यादिना स्वयमेव वदिष्यति ॥ १३ ॥

मुनिभिरप्यविज्ञेयश्चेत् सविता तर्हि तव[२] ज्ञानार्थं प्रयत्नो व्यर्थ इति । नेत्याह —

सर्वाङ्गीणः सकलवपुषामन्तरे योऽन्तरात्मा
तिष्ठन् काष्ठे दहन इव नो दृश्यसे युक्तिशून्यैः ।
यच्च प्राणारणिषु नियतैर्मथ्यमानासु सद्भि-
र्दृश्यं ज्योतिर्भवसि परमादित्य ! तस्मै नमस्ते ॥ १४ ॥

सर्वेषु अङ्गेषु इनति गच्छति व्याप्नोतीति सर्वाङ्गीणः(?) । सकलवपुषां ब्रह्मादिस्तम्बपर्यन्तप्राणिदेहानामन्तरे हृदयपुण्डरीके । अथवा अधिष्ठानत्वेन सर्वाधारादिना रज्जुवत् तिष्ठन् सदावस्थितः । अन्तरात्मा प्रत्यगात्मा सर्वत्र तिष्ठतोऽप्य[४]दर्शने दृष्टान्तः काष्ठे दहन इति । दारुणि विद्यमानोऽपि दहनः आवृतत्वान्न दृश्यते यथा, एवमादित्योऽपि सकलवपुषामन्तस्तिष्ठन् अज्ञानावृतत्वाद् मन्दानां नो दृश्यसे । अत्र हेतुः — युक्तिशून्यैः । प्रमाणशिक्षाशून्यैः । अथवा युक्तिर्योगः चित्तवृत्तिनिरोधः तच्छून्यैः । न दृश्यसे त्वम्, अचिन्त्यसामर्थ्यात् । कथं तर्हि तस्य दर्शनं तत्राह — यच्च । प्रसिद्धमित्यर्थः । प्राणारणिषु । अन्तःकरणबहिष्करणानि प्राणाः अरणिवदरणयः मथनयोग्यत्वात् । समाधानयोग्यत्वादित्यर्थः । नियतैः यमनियमादिमद्भिः । मथ्यमानासु विलोड्यमानासु । सद्भिः मुमुक्षुभिः । दृश्यं काष्ठे दहनवदपरोक्षीभूतम् । यद् ज्योतिः स्वप्रकाशं ब्रह्म, तत् त्वं भवसि तद्रूपोऽसि । हे भगवन् ! परमादित्य ! तस्मै ते नमः । सांख्या योगाश्च मोक्षमार्गे पटुतराः । तैः प्राप्यं सर्वोत्कृष्टं वस्तु भगवानेवेति विद्यमानगुणकीर्तनं स्तुतिः ॥ १४ ॥

१. 'यां घृ' क. पाठः. २. 'ज्' ख. पाठः. ३. 'स्य', ४. 'त्र' क. पाठः.

अतीन्द्रियं भगवतो रूपं योगिभिः प्राप्यमित्युक्तम् । तर्हि प्रत्यक्षयोग्यप्रपञ्चात् परमार्थाद् भिन्नमित्याशङ्क्याह —

स्तोता स्तुत्यः स्तुतिरिति भवान् कर्तृकर्मक्रियात्मा

क्रीडत्येकस्तव नुतिविधावस्वतन्त्रस्ततोऽहम् ।

यद्वा वच्मि प्रणयसुभगं गोपते! तच्च तथ्यं

त्वत्तो ह्यन्यत् किमिव जगतां विद्यते तन्मृषा स्यात् ॥

हे भगवन्! त्वं क्रीडसि । कथम् । स्तोता स्तुतिकर्ता । स्तुत्यः स्तुतिविषयः । स्तुतिः स्तवनम् । इतिशब्दः प्रकारे । भवान् विष्णुः सविता । 'तत् सृष्ट्वा तदेवानुप्राविशद्' इत्यविकृतस्य प्रवेशश्रवणाद् विवृणोति — कर्तृकर्मक्रियात्मा क्रीडतीति । लीलां करोति । एकः अद्वितीयः । तस्मात् तव नुतिविधौ स्तोत्रकरणे । अस्वतन्त्रः ततोऽहं परवशः । अन्येनान्यः स्तूयते नतु स्वयमेव स्वात्मानमेव । आत्मानमेवमजानतः शक्यमित्यत आह — यद्वा वच्मि । स्तोत्रं वदामि । प्रणयसुभगम् । एतत् स्तोत्रं भद्रमिति न वदामि, किन्तु प्रणयेन मम भक्त्या सुभगं भद्रं पुत्रवचनमिव मातुः । हे गोपते! एको गुणोऽस्ति मम वचस इत्याह — तच्च वचनं तथ्यम् । सत्यमित्यर्थः । किं तत् । त्वत्तः आदित्यात् । अवस्थाचतुष्टयस्वामिन इत्यर्थः । जगताम् अन्यत् । अन्यत्वेन शङ्क्यमानं यत् तन्मृषा मिथ्या । परिपूर्णस्य ब्रह्मणः लोकरक्षार्थं स्वीकृतदेहः सविता सर्वात्मकः । तस्मादन्यन्नास्तीत्यर्थः ॥ १५ ॥

आदित्य एव परमार्थः तस्मादन्यत् तुच्छं मायामयमित्युक्तम् । तर्हि रज्जुसर्पवद् विद्यया शीघ्रं निवृत्तिसम्भवाद् ज्ञानार्थे प्रवृत्तिरयुक्तेति तत्राह

ज्ञानं नान्तःकरणरहितं विद्यतेऽस्मद्विधानां

त्वं चात्यन्तं सकलकरणागोचरत्वादचिन्त्यः ।

ध्यानातीतस्त्वमिति न विना भक्तियोगेन लभ्य-

स्तस्माद् भक्तिं शरणममृतप्राप्तयेऽहं प्रपन्नः ॥ १६ ॥

---

१. स्यात् ॥ इति' ख. पाठः. २. 'व । एवमजा' क. पाठः. ३. 'र्थः । अ' ख. पाठः.

ज्ञानं निर्गुणब्रह्मविद्येत्यर्थः । अन्तःकरणरहितं प्राकृतबुद्धिरहितमि[1]त्यर्थः । न विद्यते । मुनीनामिव ब्रह्मविद्या बालानां नास्तीत्यर्थः । आदित्यस्य यत् पारमार्थिकं रूपं स्वतन्त्रं ब्रह्म तदिह त्वमित्युच्यते । अत्यन्तं, केनापि प्रकारेण सकलकरणागोचरत्वात् । अन्तःकरणबहिष्करणानि सकलकरणानि । तथाहि — स्थूलशरीरस्यान्तः प्राणिनां सूक्ष्मं[2] शरीरमस्तीति वेदसिद्धम् । तन्मरणकाले देशान्तरं प्रति गच्छति । तस्य मध्यवर्त्यन्तःकरणं प्रभावद् द्रव्यं दुकूलतुल्यं चक्षुःश्रोत्रादिदशेन्द्रियद्वारेण तत्तद्विषये गच्छति । दीर्घप्रभारूपेण ध्रुवादिपर्यन्तं गच्छति बुद्धिः[3] । तत्र श्रोत्रादिपञ्चकानां शब्दादिपञ्चकविषयत्वान्नात्मग्रहणम् । अन्तःकरणवृत्तेरपि स्वतः पराग्विषय[4]त्वाच्च जडत्वाच्च न साक्षादात्मदर्शनम् । एवं सकलकरणागोचरत्वादचिन्त्यः परमात्मा । तर्हि ध्यानक्रियया (प ? द)श्यतामिति । नेत्याह — ध्यानातीतस्त्वम् । ध्यानस्य चित्तव्यापारस्य गोचरमतीत्य स्थितः । 'नेदं यदिदमुपासते' इति श्रुतेः । ध्यातृध्यानध्येयानां पराङ्मुखत्वादित्यर्थः । इतिशब्दो हेतौ । अस्मादेवमित्यर्थः । तस्मान्मन्दानां गत्यन्तराभावाद् भक्तिं विना न लभ्यः । अतो भक्तिं शरणमाश्रयं प्रपन्नः । भक्तिशरणस्य प्रयोजनमाह—अमृतप्राप्तये । अमृतत्वस्य मोक्षस्य प्राप्त्यर्थं भक्तिं शरणं प्रपन्नः इत्यन्वयः ॥ १६ ॥

इदानीं भक्तेर्गुणकीर्तनेनादित्य एव स्तूयते श्लोकद्वयेन —

हार्दं हन्ति प्रथममुदिता या तमः संश्रितानां
सत्त्वोद्रिक्ता तदनु च रजः कर्मयोगक्रमेण ।
सा स्वभ्यस्ता प्रथयतितरां सत्त्वमेव प्रसन्ना
निर्वाणाय व्रजति शमिनां तेऽर्क ! भक्तिस्त्रयीव ॥ १७ ॥

हे अर्क ! ते भक्तिः त्रयीव वेदत्रयमिव । द्विधा योजना । वेदविहितधर्मापूर्वविषया । वेदविषया च सर्वश्लेषा भक्तेः स्तुत्यर्थं साम्येन । हार्दं हृदये भवं जीवस्वरूपाच्छादकं तमः पापं रजश्च हन्ति नाशयति । प्रथममुदिता प्रथमोत्पन्ना । बाला भक्तिः प्रथमपठिता त्रयीव, या शास्त्रेषु

१. 'द्धिरित्य' ख. पाठः. २. 'क्ष्मं नाम श', ३. 'ति 'बुद्धिवृत्तिरहितम् । तत्र' ख. ग. पाठः. ४. 'विषयत्व' क. पाठः.

स्थिता[१]। तमःसंश्रितानां तामसानां जन्तूनामित्यर्थः। राजसानामाह—सत्त्वोद्रिक्ता। ऋषिच्छन्दोदेवतापुरस्सरं स्वाध्यायं कृतवतः त्रयी चित्तगतं रजो नाशयति। कर्मयोगक्रमेण। सात्त्विकस्वाध्यायेन त्रय्या गुणः कथ्यते। कर्म ब्रह्मयज्ञः योगो वेदार्थस्मृतिः तयोरभ्यासक्रमेण। सा त्रयी स्वभ्यस्ता प्रथयतितरां प्रकाशयतितराम् अतिशयेन सत्त्वं चित्तगतं निर्मलत्वम्। अथवात्मज्ञानं सत्त्वं सत्त्वकार्यत्वात्। सत्त्वं प्रथयति अपरोक्षीकरोति प्रकाशयति। एवकारेण सत्त्वस्य ज्ञाने परिसमाप्तिः सूचिता। अत्र हेतुः — प्रसन्ना ईश्वरानुग्रहात् सर्वगुणोपेता। त्रयी निर्मला। तत्फलमाह— निर्वाणाय। मोक्षाय। व्रजति गच्छति, समर्थीभवतीत्यर्थः। शमिनां शान्तानां, विरक्तानामित्यर्थः। त्रयीवेति सर्वश्लेषा। यथा त्रयी उक्तप्रकारेण क्रमेण मोक्षहेतुः स्वाध्यायमात्रेण, एवं भक्तिरपि त्रिविधा सात्त्विकी राजसी तामसी च क्रमेण तमोरजोनाशनद्वारेण सत्त्वावस्थां प्राप्ता शमिनां निर्वाणाय व्रजति। एवं त्रयीविहितं कर्म। यदा त्रयीशब्देन त्रयीविहितं कर्मापूर्वं विवक्षितं, तच्च प्रथममुदितं यथाकथञ्चिदनुष्ठितं हार्दं तमो हन्ति। पुनर्द्रव्यदेवतादिज्ञानपुरस्सरं क्रमेणानुष्ठितं रजो हन्ति। पुनः सात्त्विकमनुष्ठितं तदेवाभ्यस्यमानं कर्मयोगक्रमेणाभ्यासात् प्रथयति चित्ते सत्त्वम्। प्रसन्ना विद्यां जनयति। 'धर्मेण पापमपनुदति'।

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः।"

इत्यादिश्रुतेश्च स्मृतेश्च। एवं वेदतुल्यं फलमुत्पादयति ते भक्तिरिति विद्यमानगुणकीर्तनं स्तुतिः ॥ १७ ॥

पुनरपि भक्तेर्गुणमाह —

तामासाद्य श्रियमिव गृहे कामधेनुं प्रवासे
ध्वान्ते भातिं धृतिमिव वने योजने ब्रह्मनाडीम्।
नावं चास्मिन् विषमविषयग्राहसंसारसिन्धौ
गच्छेयं ते परमममृतं यन्न शीतं नचोष्णम् ॥ १८ ॥

---

१. 'स्तु' ख. ग. पाठः. २. 'च' क. पाठः. ३. 'कारयति' ख, ग. पाठः.

ताम् अतीतश्लोकोक्तां भक्तिमित्यर्थः । आसाद्य यथावत् प्राप्य । तस्याः प्राप्तिमपि स्तौति — श्रियमिव गृहे । यस्य गृहे श्रीः प्राप्ता तस्य सर्वा सम्पद् भवतीति प्रसिद्धमित्यर्थः । एवं तव भक्तिर्यस्य गृहस्थस्य दैववशात् प्राप्ता तस्य सर्वा सम्पदयत्नतः सिध्यतीति भावः । तस्य गृहस्थस्य गृहभरणमयुक्तमिति मत्वा यदि प्रवासो देशान्तरगमनं कृतं तत्र मार्गे ते भक्तिः । कामधेनुमिव । इवशब्दः सर्वपदेषु योजयितव्यः । कामधेनुः सुरभिः तामिव गृहे तिष्ठति । यथा वसिष्ठादेर्गृहे कामधेनुः सुरभिः सर्वं दोग्धि अन्नपानं, गृहाणि, परिचारकजनं, राज्ञो गृहोपकरणमातिथ्यार्थं निर्मितवती, पुनस्तस्या अभिनिवेशप्रवृत्तौ सेनासमूहं निर्माय युद्धेन राजसेनां जयति, एवं मार्गे गच्छतः कल्पकवृक्षवत् सर्वं ददाति ते भक्तिप्राप्तिरित्यर्थः । पुनस्तस्यैव गृहस्थस्य वनं प्रति गच्छतः पथि सूर्येऽस्तंगते तमसा पूर्णे रात्रौ जाते ध्वान्ते तमसि पादविक्षेपायोग्ये तत्र भातिमिव । भातिः प्रकाशः । तद्वत् सर्वं प्रकाशयति ते भक्तिः । इवशब्दः सर्वत्र सम्बध्यते । सर्वं तमो नाशयति भक्तिः । पुनश्च स एव वानप्रस्थाश्रमं प्रविष्टः, तत्र धृतिमिव ते भक्तिः । शीतोष्णादिभिः सिंहव्याघ्रादिभिः क्षुत्पिपासादिभिश्च जातं दुःखं नाशयति धैर्यम् । यदि वनस्थस्य धैर्यं देवतासहायत्वेन तिष्ठति, तत्र सुखनिवासो भवतीति प्रसिद्धम् । एवं भक्तिरपि सुखहेतुर्वने । पुनः स एवाष्टाङ्गयोगे प्रवृत्तो यदा तदा यमादिना प्राणायामकाले सुषुम्नाप्रवेशः क्लेशनाशकः प्रसिद्धो योगशास्त्रे । तस्मात् (योजने योगकाले) ते भक्तिर्ब्रह्मनाडीमिव । मनश्शुद्धिसाधनमिति भावः । पुनस्तस्य योगिनः संसारे दोषज्ञानं भवति । कष्टोऽयं संसारसमुद्रः । कुतः । ग्राहभूयिष्ठत्वात् । तथाहि—विषमाः अतिदुस्सहाः विषयाः शब्दादिरागाः ग्राहवद् मकरादिवत् पुरुषान् ग्रसन्ति सम्पूर्णाः यस्मिन् संसारसिन्धौ स विषमविषयग्राहसंसारसिन्धुः निरालम्बनं भाति योगिनः । तत्र नावमिव । महानौकावत् ते भक्तिः । यथा समुद्रे पतितस्य पारं गन्तुं समर्था नौका एवं संसारसमुद्रे निमग्नस्य मोक्षतीरं प्रापिका ते भक्तिः । तां भक्तिमासाद्य मोक्षं परममृतं ते आनन्दं गच्छेय-

---

१. 'प्रादुर्भूता त', २. 'वेत्र यो', ३. 'जायमानं दुः' ख. ग. पाठः ४. 'कः । अतः तत्रयोजने योगकाले शुद्धि' ख. पाठः.

मिति योजना । पुनरप्यमृतं व्याचष्टे — यत्र शीतं न चोष्णम् । सर्वद्वन्द्वरहितमित्यर्थः । जननमरणकामक्रोधादयो[२]ऽनन्ताः द्वन्द्वाः । एवम्भूतभक्तेः स्वामित्वादादित्यो महागुणीति विद्यमानगुणकीर्तनं स्तुतिः ॥ १८ ॥

इतश्चोत्तमोत्तमो भगवानित्याह

अग्नीषोमावखिलजगतः कारणं तौ मयूखैः
सर्गादाने सृजसि भगवन्! ह्रासवृद्धिक्रमेण ।
तावेवान्तर्विषुवति समौ जुह्वतामात्मवह्नौ
द्वावप्यस्तं नयसि युगपन्मुक्तये मु[३]क्तिभाजाम् ॥ १९ ॥

अग्नीषोमौ सर्वजगत्कारणमित्येकेषां मतम् । प्रकृतिपुरुषावित्यन्येषाम् । अव्याकृतमित्यपरे । सर्वथा कारणपर्यायात् । अखिलजगतः आकाशादितृणपर्यन्तस्य कारणम् । तौ कार्यावस्थां नीत्वा स्थूलदृष्ट्या कारण मिति निर्दिष्टौ । मयूखैः रश्मिभिः । सर्गे उत्पत्तिकाले. प्रातःकाल इत्यर्थः । आदाने प्रलयकाल इत्यर्थः । सृजसि उत्पादयसि । सर्गश्च आदानं च सर्गादानम् । तयोः कालः सप्तमीविभक्त्या वाञ्छितः । प्रत्यक्षं चैतत् । सोममग्नेश्चाभावे जठराग्निर्देहं दहति । तथा वह्नेरुष्णस्य सर्गाभावे देहो द्रवीभूय नश्यति । एवमधिदैवेऽपि । हे भगवन्! ह्रासवृद्धिक्रमेर्ण[४] । सोमस्य हेमन्तकालमारभ्य ग्रीष्मकालपर्यन्तं ह्रासः विशेषः । तस्मिन्नेव काले अग्नेर्वृद्धिः । पुनः प्रावृट्शरदोरग्नेर्ह्रासः सोमस्य वृद्धिः । उभयत्र मयूखानां विभज्य कारणत्वं श्रुत्यादौ सिद्धम् । सर्वप्राणिनां संसारस्थितिहेतुत्वमुक्तमादित्यस्य । इदानीं मोक्षहेतुत्वमाह — तावेव । यावग्नीषोमौ यदा सृजसि तावेव तदेव अस्तं नयसि नाशयसि । अन्तः अन्तःकरणसुषुम्नामध्ये । विषुवति । विषुवानिति योगिनां मोक्षमार्गः हृदयमारभ्य ब्रह्मलोकपर्यन्तं गतः । तस्मिन् विषुवतीत्यर्थः । य आत्मा प्रत्यगात्मा वह्निवद् वह्निः ज्ञानिनां संसारदाहकत्वात् । तस्मिन्नग्नौ । तावेव जुह्वताम् । समौ संसारकारणभूतौ उभौ । जुह्वतां महायोगिनाम् । होमो नाम कार्यकारणप्रपञ्चसंहार इति स्वेनैव वक्ष्यते । द्वावपि संसारकारणभूतौ उभावपि सर्वात्मना संहरताम् । द्वावपि सोमं चाग्निं चास्तं नयसि । युगपत् । अन्यकाले होमः ततोऽन्य-

१. 'ष्णम् । द्व', २. 'यो द्व' क. पाठः. ३. 'भ' ख. पाठः. ४. 'ण । प्रावृट्पर्यन्तमग्नेर्वृद्धिः । पुनः सोमस्य वृश्चिकमासपर्यन्तं वृद्धिः । अग्नेर्ह्रासः । उ' ख. ग. पाठः.

काले सर्गहेतुत्वमिति नोच्यते, किन्तु युगपदुभयमेकस्मिन् क्षणे। एकस्यैव घटस्य युगपद् नाशमवस्थानं च न करोति कुलालः। त्वं तु युगपदुभयं करोषीत्याश्चर्यहेतुत्वं भगवतः प्रतिपाद्यते। किमर्थमित्याह — मुक्तये मोक्षार्थम्। मुक्तिभाजां विरक्तानां मुमुक्षूणामित्यर्थः। संसारिणां दीयमानमेव जगत्। तदेव मुमुक्षूणां नाशयतीत्याश्चर्यहेतुत्वं स्तुतिः। न च विरोधः, भगवत्सामर्थ्यादिति केचित्। रूपभेदादज्ञानस्य योगिशरीरवदित्यपरे। नच संज्ञामात्रमेव नाशः मोक्षार्थत्वादिति भावः। केचिन्नित्यनिवृत्तत्वात् संसारस्य युगपन्नाशानाशौ सम्भवत इति वदन्ति। तदयुक्तम्। प्रसक्तप्रतिषेधाङ्गीकारात् ॥ १९ ॥

मोक्षहेतुत्वमुक्तं भगवतः। तत्रोपायानुष्ठानासम्भवात् कृपामात्रेण मोक्षो दातव्य इत्याह —

स्थूलत्वं ते प्रकृतिगहनं नैव लक्ष्यं ह्यनन्तं
सूक्ष्मत्वं वा तदपि सदसद्व्यक्त्यभावादचिन्त्यम्।
ध्यायामीत्थं कथमविदितं त्वामनाद्यन्तमन्त-
स्तस्मादर्क! प्रणयिनि मयि स्वात्मनैव प्रसीद ॥ २० ॥

अयमर्थः — हस्तपादादिभिः कर्मभिश्च भगवत्प्राप्तिरशक्या। तस्माद् ध्यानादिजन्यबुद्धिवृत्त्या पश्यन्ति मुनयः। तदपि दुर्लभं भक्तिं विना। तथाहि — स्थूलत्वं बृहत्तरत्वं ब्रह्माण्डादिदेहत्वम्। ब्रह्माण्डादधिकतरत्वम्। ते तव। प्रकृतिगहनम्। प्रकृतितः स्वभावत इत्यर्थः। गहनमपरिच्छेद्यं शरीरिभिः। दशसु दिक्षु चित्तविनियोगे तत्र तत्रानन्त्यप्रतीतेः। इतिहासादौ चानन्त्यं श्रूयते स्थूलस्य। तर्हि लक्षणेनैव ज्ञायतामिति। तत्राह — नैव लक्ष्यमिति। लक्षणप्रतिपादनमपि न शक्यमित्यर्थः। तत्र हेतुरनन्तं हीति। अन्तरहितमनन्तं परिपूर्णं मोक्षधर्मे सूचितम्। देशत आनन्त्यं विराट्पुरुषस्य। ब्रह्माण्डाद् बहिरवस्थितानामादित्यसदृशानामपि स्थूलप्रपञ्चं गन्तुं विज्ञातुं वा न शक्यमिति भावः। तर्हि सूक्ष्मं ध्यायतामिति,

१. 'स्य ना', २. 'श्चर्य भ', ३. 'नाम्। सं' क. पाठः. ४. 'न्नि', ५. 'नेति प्रतिपाद्यते। त' ख. ग. पाठः.

नेत्याह — सूक्ष्मत्वं वा । करणागोचरं सूक्ष्मम् । द्रव्यान्तरेण प्रतिहत्ययोग्यं सूक्ष्ममिति वा लक्षणम् । तदुभयमिह न सम्भवति । कुतः । सदसद्व्यक्त्यभावात् । सदिति सामान्यमस्तिबुद्धिविषयः । असदिति नास्तिबुद्धिविषयः परोक्षम् । उभयथापि व्यक्तिर्नास्ति । भगवतः स्वयम्प्रकाशत्वात् । विदिताविदिताभ्यामन्यत्वादचिन्त्यममनोगोचरम् । फलितमाह — कथं ध्यायामीत्थमविदितम् । न कथञ्चिदपीत्याक्षेपे कथंशब्दः । त्वामिति ब्रह्मस्वरूपं लक्ष्यते । अनाद्यन्तम् आद्यन्तरहितम् । पूर्वोत्तरकालकोटिरहितम् । सर्वाधिष्ठानमिति भावः । अन्तः हृदयपुण्डरीके । यस्माद् ध्यानासम्भवः, तस्मात् हे अर्क ! तव प्रणयिनि स्नेहवति भक्तिमति मयि साम्बे इत्युपलक्षणं, भक्तिमत्सु । स्वात्मनैव स्वस्वरूपेणैव, मत्प्रयत्नं विना तव करुणामात्रेण । प्रसीद प्रसन्नो भव । आत्मरूपेणापरोक्षो भव । मम तु किमपि कर्तुं न शक्यते ज्ञानं प्रति । तदुक्तं — 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतौ ॥ २० ॥

स्थूलं सूक्ष्मं च भगवत्स्वरूपं मनसा न वेद्यं चेत् तर्हि स्तुतिरप्यशक्या व्यर्था च बालानां शास्त्ररचनावद् इत्याशङ्क्याह —

**यत्तद् वेद्यं किमपि परमं शब्दतत्त्वं त्वमन्त-**
**स्तत् सद्व्यक्तिं जिगमिषु शनैर्लाति मात्राः कलाः खे ।**
**अव्यक्तेन प्रणववपुषा बिन्दुनादोदितं स-**
**च्छब्दब्रह्मोच्चरति करणव्यञ्जितं वाचकं ते ॥ २१ ॥**

अयं भावः — वाचकाद् वाच्योत्पत्तिरिति स्थूलं मतम् । वाच्याद् वस्तुतो लक्ष्याच्च वाचकशब्दोत्पत्तिर्यस्मात् तस्मात् सर्वे वेदशब्दाः भगवत्स्वरूपादुत्पन्नत्वात् तत्स्वरूपं प्राप्य बोधयन्ति । तस्मात् स्तोत्रमपि सफलमिति प्रतिपाद्यते । यथा रूपकार्यं चक्षुः स्वकारणं रूपं प्रकाशयत्येव न रसम्, एवं ब्रह्मकार्यत्वाच्छब्दस्य ब्रह्मप्रकाशकत्वं सम्भवतीति । त्रिषष्टिवर्णश्लोकेऽप्युक्तार्थस्य प्रपञ्चोऽयं श्लोकः । यत्तदित्येकं पदम् । वेदप्रसिद्धमित्यर्थः । 'औपनिषदः पुरुष' इति च प्रसिद्धिः । वेद्यं ज्ञातव्यं पुरुषार्थ-

---

१. 'का' ग. पाठः. २. 'वादिति । स' ख. पाठः. ३. 'र्के । प्र' क. पाठः. ४ 'ब्रह्मरू' ख. पाठः. ५. 'य' क. पाठः.

रूपमित्यर्थः । न कर्मत्वेन वेद्यमित्याह — किमपि अचिन्त्यम् । सम्प्रदाय[1]-रहितानामवेद्यमित्यर्थः । परमं सर्वस्मादुत्कृष्टमित्यर्थः । शब्दतत्त्वं सर्ववर्णानां कार्याणां पारमार्थिकरूपं तत्त्वमधिष्ठानामित्यर्थः । स्फोटरूपमिति केचित् । स्थूलं तत् । स्फोटस्य वेद्यत्वात् । स्वप्रकाशत्वे तु न विमतिः । त्वं भगवद्रूपमित्यर्थः । ननु ब्रह्मणः शब्दात्मकत्वमत्र प्रतिपाद्यते । अन्यथा शब्दतत्त्वमिति निर्देशवैयर्थ्यादिति चेत् । तन्न । 'अशब्दमस्पर्शामि'ति निषेधात् । ननु द्विविधः शब्दः लक्ष्यो वाच्यश्च । तत्र वाच्यस्य ब्रह्मत्वं निषिद्धं न लक्ष्यस्येति चेत् । तन्न । स्पर्शोऽपि द्विविधः । रूपमपि द्विविधम् । तत्र लक्ष्यं रूपं ब्रह्मेति स्यात् । किमर्थं तर्हि शब्दतत्त्वमिति निर्देशः । उच्यते । शब्दस्य ब्रह्मविवर्तत्वेन[2] तद्बोधकशक्तिसूचनार्थं[3] । स्फोटशब्दस्यापि स्वप्रकाशत्वे दोषाभाव इत्यन्ये । अन्तः प्राणिनां[4] मूलाधारे इत्यर्थः । तदिति । सर्वव्यवहारातीतं ब्रह्मेत्यर्थः । सद्व्यक्तिम् । सदिति सत्तामित्यर्थः । व्यक्तिं स्फूर्तिमित्यर्थः । जिगमिषु उभयरूपं गन्तुमिच्छु, ईक्षणं कृतवदित्यर्थः । 'जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'त्यादि परस्य सङ्कल्पः सूचितः श्रुतौ । शनैः क्रमेण बाल्ययौवनादिवत् । प्रथमं परावस्थां प्राप्नोति । पश्चात् पश्यन्तीम् । पुनर्मध्यमाम् । पश्चाद् वाचं करणविशदां वैखरीं वाचकशक्तिमतीं च । लाति गच्छतीत्यर्थः । किम् । मात्राः । मीयन्ते परिच्छिद्यन्ते इति मात्राः । ककारादिक्षकारान्ता वर्णाः स्वरशून्यत्वान्मात्राः । कलाः षोडश स्वराः अकारादयः । उभयभागं लाति ब्रह्म । खे मुखाकाश इत्यर्थः । शनैरिति पदस्यार्थं स्वयमेव स्पष्टयति साम्बः । अव्यक्तेन सूक्ष्मेण अयोगिनामप्रत्यक्षेणेत्यर्थः । प्रणववपुषा । सर्वशब्दानां बीजावस्था प्रणवः । तेन वपुषा । 'तद् यथा शङ्कुना' 'ओमित्येतदक्षरमि'त्यादिश्रुतिसिद्धेन । इत्थम्भावे तृतीया । प्रणवस्य वपुषा सूक्ष्मदेहेनेति भावः । एतदपि विशदयति— बिन्दुनादोदितं सत् । बिन्दुरिति शब्दस्य तृतीयावस्था । नाद इति द्वितीयावस्था शक्तिकार्या । ननु चतुर्थी बिन्दुः शान्तेरप्यवस्थात्वात् । तन्न । अवस्थातीतत्वाच्छान्तेः । कारणत्वादुपचारेण तस्या[5] अवस्थात्वव्यवहार इत्युक्तम् । सदिति । बिन्दुनादरूपेण स्थितं सदित्यर्थः । अथवा सद् अबाध्यं निर्गुणं ब्रह्मेत्यर्थः । शब्दब्रह्म तत्प्रतिपत्तिहेतुः सर्वं वेदमात्रम् ।

---

१. 'न' ख. पाठः. २. 'निवर्तकत्वे' क. पाठः. ३. 'य । श', ४. 'नां हृदये इ', ५. 'रमात्र' ख. पाठः.

"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।"

इति व्यपदेशात् । (उच्चरति) उदितम् ऊर्ध्वं चरति गच्छति । मूलाधारादारभ्य मुखदरपर्यन्तं गच्छतीत्यर्थः । एतदेव स्पष्टयति — करणव्यञ्जितम् । करणैः अभिव्यक्तिस्थानैः उरआदिभिः वैखरीपर्यन्तैः संज्ञितम् । ते तव भगवतः । वाचकम् अभिधायकं बोधकमित्यर्थः । एवं योजना— करणव्यञ्जितं शब्दब्रह्म ते वाचकमिति प्रतिज्ञा । अत्र हेतुः — यत्तद् वेद्यं किमपि परमं शब्दतत्त्वं त्वमन्तः खे सद्व्यक्तिं जिगमिषु अव्यक्तेन प्रणववपुषा शनैः मात्राः कलाश्च लाति गच्छति यस्मात् । अयं भावः — निर्गुणमेव ब्रह्म मायया छन्नं प्राणिनामन्तः सत्तास्फूर्तिमिच्छु वेदरूपेण प्रवर्तते यस्मात्, तस्माद् ब्रह्मवाचकत्वं सुकरं तस्येति न स्तोत्रवैयर्थ्यमिति सर्वात्मकत्वख्यापनेन स्तुतिः ॥ २१ ॥

इतश्चादित्यो वेदरूप इत्याह —

प्रातः सन्ध्यारुणकिरणभागृङ्मयं राजसं य-

न्मध्ये चापि ज्वलदिव यजुः शुक्लभाः सात्त्विकं वा ।

सायं साम स्तिमितकिरणं यत् तमोल्लासि रूपं

साह्नः सर्गस्थितिलयविधावाकृतिस्ते त्रयीव ॥ २२ ॥

प्रातः उदयकाले । सन्ध्यानिमित्तं जातारुणिमा सन्ध्यारुणिमा । तया व्याप्तकिरणानि सन्ध्यारुणकिरणानि । तानि भजतीति सन्ध्यारुणकिरणभाक् । ऋङ्मयम् ऋग्वेदप्रचुरम् । राजसं रजःप्रधानम् । ते रूपमिति विशेष्यं सर्वत्रानुषज्यते । गम्भीराः मन्दैरवेद्यार्था ऋचः । तेन राजसव्यवहारः ऋग्वेदे । वस्तुतः सात्त्विका ऋचोऽपि । यत् । यस्मादर्थे यच्छब्दः । मध्ये मध्याह्ने । ज्वलदिव (यजुः) प्रकृष्टप्रकाश इव यजुर्वेदः । स्पष्टं स्वाहादिना धर्मादिप्रकाशकत्वात् ज्वलदित्युच्यते यजुः । शुक्लभाः स्पष्टप्रकाशार्थः । अत एव सात्त्विकं ते रूपमिति सम्बध्यते । तद्वदादित्योऽपि । स्पष्टं मध्याह्ने प्रपञ्चप्रतिभासहेतुत्वात् तेजोबाहुल्यप्रतिभासाच्च यजुरिव तस्य रूपम् । अत एव सात्त्विकं सत्त्वगुणप्रधानं भाति लोकस्य । सर्वदा सात्त्विकप्रकाश एव भगवान्, तथापि लोकदृष्ट्या वेदरूपकसिद्ध्यर्थं मध्याह्ने[3]

---

१. 'देवैर', २. 'स्तुतस्तु सा', ३. 'ह्ने प्रकाश इ' ख. पाठः.

इति निर्देशः । वाशब्दश्चार्थे । सायमस्तमयकाले । सामवेदवत् तव रूपम् । साम्नां गानप्रधानत्वाद् अर्थोऽत्यन्तमस्पष्टः । तेन साम्येन ते रूपं स्तिमितकिरणम् । स्तैमित्यं व्यापाराभावो रश्मीनां सन्ध्याकाले मन्दप्रकाशत्वादित्यर्थः । यत् यस्मात् तमोल्लासि । साम्यं विशदयति — यद् रूपं मण्डलस्य वर्णं सन्ध्यातमसा व्याप्तवद् भाति यस्मात् । सा एवंविधा । विशेष्यानुसारेण स्त्रीलिङ्गनिर्देशः । आकृतिर्मण्डलच्छाया । अह्नः दिवसस्य सम्बन्धी सर्गः स्थितिश्च लयश्च इति सर्गस्थितिलयाः । तेषां विधौ निर्माणे । ते । मण्डलरूपस्य ते तव । त्रयीव वेदत्रयमिव । सन्ध्यात्रये गुणत्रयसम्बन्धो वेदस्य प्रतीयते । क्रमेण 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते' इति कालत्रयसम्बन्धः प्रतीयते (क्रमेण वेदत्रयस्य कालस्य गुणत्रयसम्बन्धः प्रतीयते?) प्रत्यक्षेण । अतस्तदारोप्यते वेदे मण्डलस्य गुणत्रयसम्बन्धात् कालत्रयसम्बन्धाच्च । अन्यान्यपि वाक्यानि वेदे[1] द्रष्टव्यानि । हे भगवन्! ते आकृतिस्त्रयीवेति प्रतिज्ञा । अत्र हेतुः — प्रातःकाले ऋङ्मयं यस्मात् ते रूपं मध्याह्ने यजुर्मयं यस्मात् सायं प्राते साम‍रूपं यस्मात् । इति गुणकीर्तनं स्तुतिः ॥ २२ ॥

मण्डलस्य स्तुतिः कृता । इदानीं स्वरूपस्य[2] स्तुतिमाह —

ये पातालोदधिमुनिनगद्वीपलोकाधिबीज-
च्छन्दोभूतस्वरमखनदत्सप्तसप्तिं प्रपन्नाः ।
ये चैकाश्वं निरवयववाग्भावमात्राधिरूढं
ते त्वामेव स्वरगुणकलावर्जितं यान्त्यनश्वम् ॥ २३ ॥

'तं यथायथोपासत' इति श्रुत्या उपा(स्य अ ?स्त्य)नुरूपमेव फलं ददति अन्ये देवाः । आदित्यस्तु महाकारुणिकत्वादेतं न्यायं परित्यज्य तदतिरिक्तमेव फलं ददातीति स्तूयतेऽनेन श्लोकेन । ये कार्योपासका इत्यर्थः । कोऽसौ कार्योपाधिर्भगवत उपाधित्वेन कल्पितः, तं प्रपञ्चयति — पातालेत्यादिना । सप्तसप्तिरिति भगवतो नाम श्रुतौ प्रसि-

१. 'देषु व्याहृतानि' क. पाठः. २ 'स्यातिस्तु' ख. पाठः.

द्धम् । तेन सप्तसङ्ख्यासमवायि प्रपञ्चजातं भगवतोऽश्वमिति कल्प्यते । श्वो न तिष्ठतीत्यश्वं जगद् यस्य स सप्तसप्तिः । ते प्रपन्ना इति उपासका इत्यर्थः । अश्वशब्दार्थं प्रपञ्चयति — पातालाः सप्त । अतलवितलनितलसुतलतलातलरसातलपातालाः सप्ताश्वाः । एवमुदधयः सप्त । लवणेक्षुसुरासर्पिर्दधिपयःशुद्धजलानि । मुनयः सप्त । वसिष्ठोऽत्रिर्भृगुः क्रतुः पुलहः पुलस्त्योऽङ्गिरा इति । सप्त नगाः पर्वताः ।

"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारिजातश्च सप्तैते कुलपर्वताः ॥"

सप्त द्वीपाः । जम्बुशाककुशक्रौञ्चशल्मलिप्लक्षपुष्कराख्याः । सप्त लोकाः भूर्भुवःस्वर्महर्जनस्तपःसत्यमिति । सप्ताधयः —

"मोहो मदश्च मात्सर्यं विषादः क्रोध एव च ।
मन्युश्च हर्षणं चैव देहे सप्ताधयः स्मृताः ॥"

इति । नच निकृष्टोपाधिमत्त्वेन दोषः । जगत्संहारेऽपि भगवत एव सामर्थ्यमिति सूचनार्थत्वात् । मोहादयः संसारकारका इति प्रसिद्धमिति भावः । सप्त बीजानि । यवधान्यमुद्गमाषप्रियङ्गुसर्षपतिला इति ग्राम्याणि । तिलमाषव्रीहियवाः प्रियङ्गवोऽणवो गोधूमा इति पक्षान्तरम् । श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाः गार्मुकवास्त्वानि च वेणुयवा इत्यारण्यानि । सप्त छन्दांसि । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः । भूतानि सप्त । भवन्तीति भूतानि । महदहङ्काराभ्यां पञ्च भूतानि चेति सप्त । महदहङ्कारयोरपञ्चीकृतभूतरूपत्वाद् भूतत्वम् । केषाञ्चित्[2] 'पशवो मम भूतानी'ति वेदवचनाद्[3] भूतशब्देन पशवो विवक्षिताः । ते[1] च सप्त सप्त भवन्ति । 'ग्राम्याश्चारण्याश्च' । 'सप्त ग्राम्याः पशवः सप्तारण्याः' इति श्रुतेः । तत्र सिंहादय आरण्याः । गवादयो ग्राम्याः । तथाचोक्तं —

"सिंहव्याघ्रवराहाश्च महिषा वारणास्तथा ।
ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप ! ॥
गौरजो मनुजाश्वौ चाप्यव्यश्वतरगर्दभाः ।
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ॥"

इति । सप्त स्वराः निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेति ।

१. 'तं', २. 'केचित् प', ३. 'द् ग्राम्याश्चारण्याश्च सप्त सप्त पशव इति वदन्ति । सिंह' ख. पाठः.

सप्त मखाः यज्ञाः सोमसंस्थादयः । अग्न्याधानम् अग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः । अष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः इति । अश्वान् विशिनष्टि — नदत्सप्तसप्तिमिति । नददिति नादं कुर्वन्तः लोके अश्वाः । एतेऽपि विकारशीलत्वान्नादवन्त इत्युच्यन्ते । कार्यत्वान्नदनेन विकारो लक्ष्यते । सप्तिरित्यश्वस्य नाम । तस्मात् सप्तसङ्ख्यावरुद्धं जगत् सर्वमश्वं भवति । सप्तसप्तिरिति संज्ञा । गुणवतो भगवत इत्यर्थः । तं सप्तसप्तिं सप्ताश्वं ये प्रपन्नाः उपासका इत्यर्थः । इदानीं कारणोपासकान् दर्शयति — (ये चेति ।) ये च कारणोपासकाः । कीदृशं कारणम् । तत्राह — एकाश्वम् । एकश्चासावश्वश्चेत्येकाश्वः सूक्ष्मप्रपञ्चः । सोऽप्यश्ववद् गतिशीलमुपाधिर्यस्य जगत्कारणस्य अव्याकृतस्य सवितुः स एकाश्वः । तम् । कीदृशम् । निरवयववाग्भावमात्राधिरूढमिति । निरवयवमतिसूक्ष्मम् । वाचः शब्दस्य भावः स्वरूपं वाग्भावः शब्दतत्त्वं शब्दब्रह्मेत्यर्थः । तावन्मात्रेण कार्यसम्बन्धरहितेन आरूढम् आरोहितं प्रविष्टम् । पूर्वं चोक्तम् — 'यत्रारूढं त्रिगुणवपुषि ब्रह्म तद् बिन्दुरूपम्' इति कारणस्वरूपस्य बिन्दुनादाधारत्वम् । एवंभूतमेकाश्वमादित्यं ये प्रपन्ना इति सम्बन्धः । ते उ(भे ? भये) सप्ताश्वोपासका एकाश्वोपासकाश्च । त्वामेव परमार्थरूपमेव । कीदृशम् । अथवा कार्यकारणोपासकाश्चेत् तर्हि तदनुसारेण कार्यकारणमेव यान्ति इति चेन्नेत्याह — स्वरगुणकलावर्जितमिति । स्वरा अकारादयः षोडश सूक्ष्मप्रपञ्चात्मकाः कारणोपाधयः । गुणाः सत्त्वरजस्तमांसि सगुणत्वकारणानि । कलाः ककारादिवर्णाः स्थूलप्रपञ्चात्मकाः प्रथमो विवर्तः । पुनः तेभ्यः सर्वोऽपि प्रपञ्चः, नामप्रपञ्चो वाचकः, रूपप्रपञ्चो वाच्यः, तदुभयं कालत्रयेऽपि यस्मिन् निर्गुणे ब्रह्मणि मोक्षरूपे तुरीये नास्ति, तत् स्वरगुणकलावर्जितम् । तन्निष्प्रपञ्चं यान्ति । अनश्वम् उभयविधप्रपञ्चाश्वरहितम् । निर्गुणं यान्ति । अयं भावः — अन्ये देवा उपास्यमेव कार्यं कारणं वा प्रापयन्ति । भगवांस्तु करुणानिधित्वाद् वाणिज्यं न जानाति । किन्तु कार्यकारणातीतं मोक्षमेव ददातीति महत्त्वं विद्यमानं स्तुतिः । प्रथमश्लोकोक्तसप्तस्वराश्वव्याख्यानमेतत् । 'सप्त प्राणाः प्रभवन्ति' इति श्रुतिसिद्धाश्चाश्वाः ॥ २२ ॥

कार्यकारणातीतश्चेदादित्यः तर्हि पूर्वापरविरोधः । पूर्वमुक्तं 'त्वत्तो ह्यन्यद् किमिव जगतां विद्यते तन्मृषे'ति । तत्राह —

दिव्यं ज्योतिःसलिलपवनैः पूरयित्वा त्रिलोकी-
मेकीभूतं पुनरपि च तत्सारमादाय गोभिः ।
अन्तर्लीनो विशसि वसुधां तद्गतः सूयसेऽन्नं
तच्च प्राणस्त्वमिति जगतां प्राणभृत् सूर्य आत्मा ॥ २४ ॥

प्रपञ्चस्यात्मस्वरूपादन्यत्वादद्वैतभङ्ग इति शङ्कितम् । तन्न सम्भवति । प्राणिनां देहस्यापि गुणवृत्त्या भगवत आत्मत्वादिति प्रतिपाद्यते । बाह्यप्रपञ्चोऽपि विराट्पुरुषस्य देहः । अतो भगवत्स्वरूपादन्यन्नास्तीति प्रतिपाद्यते । दिव्यम् अप्राकृतं भगवद्देहपञ्चभूतानां सूक्ष्मरूपं, तदुच्यते — दिव्यं ज्योतिःसलिलपवनैरिति । धराकाशौ चोपलक्षितौ । तत्र वियन्नित्योपात्तमिति नोपात्तम् । वसुधा चोत्तरत्रोपादास्यत इति, पञ्चीकृतत्वात् । तैः पूरयित्वा वर्षेण भूमण्डलं परिपूर्य । एवं भूतानां दिव्यत्वम् —

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"

इति । अयं भावः — मन्त्रेणाग्नौ हुतमन्नं धर्मपूर्वमादित्यात्मतां प्राप्तं भगवतो देहत्वं प्राप्तमित्यर्थः । आदित्यमुपतिष्ठत इति वचनात् । तैर्वृष्टिरूपेण सस्यक्षेत्रे पतितैः पूरयित्वा त्रिलोकीम् । त्रैलोक्यशब्देन सर्वदेवानां मनुष्याणां स्थावराणां च देहोऽपि पूरितो द्रष्टव्यः । तत्र स्थावरविशेषमाह— एकीभूतं स्थावरशरीरेण तादात्म्यं प्राप्तमित्यर्थः । कथम् । वृक्षाणां पादपत्वात् स्वमूलेन यदा पीतं तदा स्थावरादेर्जठराग्निना पाकानन्तरं शालिगोधूमादिदेहं प्राप्तमिति भावः । तत्रापि भगवतः करुणाधिक्यं सूचयति— पुनरपि चेति । प्रथमं प्राणिनां क्षुत्परिहाराय स्वदेहभूतमन्नं वृष्टिरूपेण तेभ्यो दत्तम् । पुनस्तदनन्तरमित्यर्थः । प्राणिभिः पीतमप्यन्नं तेषां बलाभावादुदरस्थमपि नैव पच्यते । अतोऽन्नवृद्धिर्न स्यादिति द्वितीयव्यापारेण तत्सारं प्राणिहृदयसारमपक्वमादाय स्वीकृत्य । गोभिः रश्मिभिः अन्नाकर्षणसमर्थैः

---

१. 'पि ऐश्वर्यवशाद् भ', २. वाय्वाकाशयोरुपलक्षितैः प', ३. 'हो विवक्षितः य', ४. 'ग', ५. 'भिः अन्नाक' ख. पाठः.

भक्षितमुदरस्थम् अन्नमानीय । अन्तर्लीनः स्वदेहे आदित्यमण्डले प्रविष्टः। अन्नं प्रति त्वमेवेति विशेषणं द्रष्टव्यम्। अन्तर्लीनस्त्वमिति । अस्यायमर्थः— केवलमादित्यस्वरूपमेव तदन्नम् । अन्यथा मध्ये पूतिकूश्माण्डवन्नश्यतीति पुनरस्याभिप्रायो द्रष्टव्यः। यथा रोगिणामुदरगतमन्नं न पच्यते तद्वद् वृक्षाणामन्नस्य पाकाभावो न युक्तः । तस्मादहमेवानीय स्वदेहगतं कृत्वा पचामि। यथा गावो भक्षितमन्नमानीय पुनरपि रोमन्थकर्मणा पाचयन्ति, एवं वृक्षादिगतमन्नं पचसि त्वमपीति गुणकीर्तनम् । पुनरपि भगवद्व्यापारमाह— विशसि वसुधामिति । मण्डले रश्मिद्वारेणागच्छति प्राणिनां वृक्षादीनां देहे ददातीति । तदभावे वृक्षाणां वृद्धिर्न स्यात् । अन्नादित्ययोर्गौणमेकत्वं सूचयितुं विशसीति मध्यमपुरुषनिर्देशः। वसुधाशब्देन वृक्षशरीरं विवक्षितं तत्कार्यत्वात् । प्रयोजनमाह— तद्गतः । स्थावरशरीरं गतः । सूयसेऽन्नं व्रीह्यादिकं जनयसीति प्रसिद्धम् । प्राणिप्रसवहेतुत्वात् सवितृनाम । अन्नस्य तु प्राणिशरीरतामाह— तच्चेति । एवं जातमन्नमित्यर्थः । प्राणः सूत्रात्मा । अन्नदेवतायाः प्राणरूपत्वं श्रुतिन्यायसिद्धमिति भावः । त्वं तव शरीरम् । इतिशब्दः यस्मादर्थे । यस्मादित्थमित्यर्थः । जगतां सर्वदेहिनां प्राणान् सर्वकरणानि बिभर्तीति प्राणभृत् । देहभृदिति भावः । अत्र प्रमाणं 'सूर्य-आत्मे'ति । अस्य मन्त्रस्यार्थद्वयं विद्यते । सूर्यः सर्वप्राणिनामात्मा देहः देहि-रूपेण देहाभेदेन परिणम्य तिष्ठतीति । तस्माददद्वितीयः । तथा भगवानात्मा प्रत्यगात्मापि सूर्य इत्यर्थः । अतो न पूर्वापरविरोधः । लोके प्रसिद्धमेतत् । आतपसंयोगाभावे ताम्बूलपत्रादीनां नीरसत्वं निर्वीर्यत्वं च भवति यस्मात् तस्मान्मण्डले स्थावरगतमन्नं रश्मिभिरानीय पक्त्वा पुनरपि रश्मिद्वारेणैव सर्वप्राणिशरीरे नीत्वा अन्नपाकं करोति भगवानिति सवितृशब्दवाच्यत्वं[4] च भगवत इत्युक्तम् ॥ २४ ॥

इदानीमेवं प्राणिपोषकत्वे भगवतः सदा संसारित्वं[5] प्रसज्यत इत्याशङ्क्य योगिभिः प्राप्यत्वान्नित्यमुक्त आदित्य इत्याह —

अग्नीषोमौ प्रकृतिपुरुषौ बिन्दुनादौ च नित्यौ
प्राणापानावपि दिननिशे ये च सत्यानृते द्वे ।

---

१. 'म् आदित्यरूपत्वात् य', २. 'योरैश्वर्ययोगात् एक', ३. 'ति अन्नात्मने जायते चेति', ४. 'त्वं मित्रशब्दवाच्यत्वं च', ५. 'त्वप्रसङ्ग इ' ख. पाठः.

धर्माधर्मौ सदसदुभयं योऽन्तराविश्य योगी
वर्तेतात्मन्युपरतमतिर्निर्गुणं त्वां विशेत् सः ॥ २५ ॥

साधकानामुत्तमो महायोगी। द्वन्द्वयोगीति तस्य नाम। सोऽपि मोक्षाय त्वां विशतीति भगवतो माहात्म्यमत्र प्रतिपाद्यते। अग्नीषोमौ पूर्वोक्तौ देवताविशेषावित्यर्थः। अस्य प्रपञ्चत्वादग्नीषोमयोर्व्याप्तिः प्रतिपाद्यते। एतौ परस्परसम्बद्धौ जगतः पालकौ। प्रकृतिर्मूलाविद्येत्यर्थः। तत्र प्रतिबिम्बितं प्रविष्टं वा चैतन्यमात्रं पुरुषः। द्वितीयद्वन्द्वं प्रपञ्चकारणं च। तस्यैव रूपान्तरमाह—बिन्दुनादौ। प्रकृतेः प्रथमविकाराभिमानिनी देवता नादः। द्वितीयविकारभागो बिन्दुः। प्रकृतेर्देवताविशेषः। सर्वेषामैश्वर्यमाह—नित्याविति। यथा परमात्मा नित्यः, एवमनयोरपि प्रवाहरूपेण नित्यत्वमस्तीति भावः। प्राणापानौ सूत्रात्मनो लीलाविग्रहौ देवताविशेषौ समस्तशरीरविधारकौ। प्राणः पुरुषः, अपानः प्रकृतिः। अस्य प्रपञ्चोऽनुगीतायां 'प्राणद्वन्द्वं च मे ब्रूहि'त्यादौ द्रष्टव्यः। दिननिशे। दिनमहरभिमानिनी देवता। निशा रात्र्यभिमानिनी च। दिनं पुरुषः। निशा रात्रिः प्रकृतिभागः। परस्परबद्धत्वं सर्वद्वन्द्वानां द्रष्टव्यं देवतारूपत्वं च। सत्यं पुरुषः, वाचो देवता अनृतं प्रकृतिः। वाग्रूपे देवतारूपे च। धर्मः पुरुषः, अधर्मः प्रकृतिरूपम्। सत् अस्तिप्रत्ययविषयः। असत् नास्तिप्रत्ययविषयः। प्रकृतिः उभयमुभयरूपं देवतारूपं कारणरूपं च। 'उभे चैवायने द्वन्द्वमि'त्यनुगीतायां शेषो द्रष्टव्यः। एवं सर्वद्वन्द्वयोराश्रयत्वेन वर्तमानं भर्गशब्दवाच्यं हुताशनरूपेण संसारदाहार्थं निरूपितम्। तत्स्वरूपमाह— यः उत्तमाधिकारी योगी अन्तः आविश्य। उभयं द्वन्द्वमात्मीयजातमन्तः प्रविश्य वशीकृत्य। योगी महायोगी वर्तेत ब्रह्मरूपेणावस्थितः। आत्मनि स्वरूपे उपरता समाप्ता मतिरन्तःकरणमस्य योगिनः स आत्मन्युपरतमतिः। मनसः आत्मनि समाप्तौ द्वन्द्वं सर्वसंसाररूपं विनष्टं भवति। अथवा अन्तरा आवेश्येति पाठान्तरम्। नार्थभेदः। प्रपञ्चसंहारार्थत्वाद् उत्तमः साधक इति भावः। स निर्गुणं तुरीयरूपं त्वां परमात्मानं विशेत् प्रविशति। मुक्तो भवतीत्यर्थः। संसारं त्यजतां भगवति प्रवेशान्न भगवतः संसारित्वप्रसङ्गः। उत्तमानां मोक्षस्थानमिति विद्यमानगुणकीर्तनं स्तुतिः ॥ २५ ॥

---

१. 'न्द्वजातं' ख. पाठः.

उत्तमानामेव चेद् भगवद्रूपप्राप्त्या तन्निष्ठत्वं, तर्हि गृहस्थादीनां भगवत्स्वरूपादन्यनिष्ठत्वमित्याशङ्क्य ऐश्वर्यवशाद् गृहस्थरूपेणापि स्थितो भगवानित्याह —

गर्भाधानप्रसवविधये सुप्तयोरिन्दुभासोः
सापत्न्येनाभिमुखमिव खे कान्तयोर्मध्यसंस्थः ।
द्यावापृथ्व्योर्वदनकमले गोमुखैर्बोधयित्वा
पर्यायेणापिबसि भगवन्! षड्रसास्वादलोलः ॥ २६ ॥

हे भगवन्! योगिनो विरुद्धः कामीव च ते क्रीडेत्यर्थः । कथम् । गर्भाधानं गृहस्थस्य ग्राम्यधर्मः, तेन प्रसूतये पुत्रस्य प्रसवाय विधिरनुष्ठानं तस्मै । सुप्तयोः सापत्न्येन सपत्नीमात्सर्येण व्याजेन परचेष्टां निरीक्ष्य सुप्तयोर्निमीलितनेत्रयोः । क्रमेण इन्दुभासोः इन्दुवत् चन्द्रवत् प्रसन्नप्रकाशयोः । अभिमुखमिव परस्परमुखं द्रष्टुमिव तद्गोचरयोः । खे आकाशे विस्तीर्णे शयने सुप्तयोरिति सम्बन्धः । कान्तयोः प(त्नी ? त्न्योः) द्वयोः । मध्यसंस्थः मध्ये भार्ययोर्मध्ये संस्थः विश्रान्त इव भर्ता । पत्नीद्वयं विशदयति — द्यावापृथ्व्योरिति । द्यौश्च पृथ्वी च द्यावापृथ्व्यौ, तयोः । वदनं कमलवद् भवति सौन्दर्यात् । तेन वदनकमले । अथवा कमलवत् प्रतीयमाने वदने वदनकमले । पृथिव्या वदनं कमलम् । दिवो वदनं चन्द्र इति भावः । गोमुखैः गावो रश्मय एव भगवतो मुखस्थानीयाः अधरपाने प्रवृत्तत्वात् । तैर्बोधयित्वा निद्रात्यागं कारयित्वा । पर्यायेण क्रमेण । न युगपत् । तथाहि । रात्रौ भगवान् द्यां प्रकाशयतीव । सर्वस्य प्रकाशस्यादित्यमूलत्वात् । तत्र पृथिव्याः कल्पना — इदानीं मां परित्यज्य दिवो मुखपानं करोति भर्ता । अन्यथा प्रकाशबहुत्वानुपपत्तेरिति व्याजेन नेत्रे निमीलयतीव । अत एव भूमेः प्रकाशो नास्ति (त)दानीं रात्रौ । तथा दिवसे च दिवः स्वर्गस्य कल्पना तथैव । इदानीं मां परित्यज्य पृथिव्या मुखं पद्मं गोमुखैर्बोधयित्वा पानं करोति भगवानिति व्याजेन नेत्रे आच्छादयतीव । दिवा द्योः सपत्नीमात्सर्यादिव प्रकाशाभावात् स्वर्गस्य । एवं पर्यायेण कदाचित् पृथिवीमुखं पिबसि, कदाचिद् दिवो मुखं हे भगवन्! आपिबसि आभीक्ष्ण्येन । षड्रसाः मधुरादयः, तेषामास्वादने लोल इव कामीव भाति । गृहस्थ एकरसमेवा-

१. 'सादस्या' ख. पाठः.

स्वादयति । त्वं तु षड्सान् । अयं भावः — लोकरक्षार्थं पृथिवीगतमूल-फलानां दोषशान्त्यर्थं पानं करोति भगवान् । अतो लोकविलक्षणत्वेन लोल इति स्तुतिः ॥ २६ ॥

इतश्च गृहस्थसाम्यं प्रतीयते इत्याह —

सोमं पूर्णामृतमिव चरुं तेजसा साधयित्वा
कृत्वा तेनानलमुखजगत्तर्पणं वैश्वदेवम् ।
आमावास्यं विघसमिव खे तत्कलाशेषमश्नन्
ब्रह्माण्डान्तर्गृहपतिरिव स्वात्मयागं करोषि ॥ २७ ॥

अयमर्थः — यथा कश्चिद् वृत्तिमान् गृहस्थः सर्वदेवार्थं वृहत्तरपात्रे चरुं निर्माय पञ्चयज्ञं कृत्वापराह्णे सर्वशेषं हविरमृतमश्नाति, एवं भगवन्तं रूपयति — सोमं चन्द्रं पूर्णामृतं सर्वदेवत्यं चरुमिव चरुं देवादिभि-र्भोज्यत्वाच्चन्द्रम् । तेजसा स्वमाहात्म्येनैव वह्निस्थानीयेन तेजसा । साध-यित्वा पाकं कृत्वा । पुनस्तेन हविषा अनलमुखमग्निमुखं होमस्थानीयमिव ब्रह्मादिस्तम्बपर्यन्तानां जठराग्निः तेन दह्यमानं जगदालक्ष्य दयानिमित्तं तस्य तर्पणं तृप्तिम् । वैश्वदेवशब्दवाच्यं कृत्वा अनुष्ठाय । आमावास्यं प्रत्य-मावास्यं यथा गृहस्थस्यापराह्णो भोजनकालः, एवं भगवतोऽप्यमावासी अपराह्णकालः । सर्वदेवानामन्नदानानन्तरत्वात् । सर्वामावासीषु विघसमिव । देवशेषममृतम्, अतिथिभृत्यादिशेषं विघसम् । खे आकाशे । चरुस्थाली आ-काशः कल्पित इत्यर्थः । खे सोमं साधयित्वेति सम्बन्धः । तत्कलाशेषम् । तस्य कलास्तत्कलाः । सोमस्य षोडश कलाः सन्ति । तेषां पञ्चदशानां शेषः देवादिभिर्भक्षितशेषः कलाशेषः । तमश्नन् सेवमानः । यजमानस्य गृहं दर्श-यति — ब्रह्माण्डान्तः । ब्रह्माण्डो नाम दशदिक्षु व्यवस्थितकार्याणामाधार-भूमिः । एकमनेकमिति च प्रतिपद्यमानः परिपूर्णत्वादेकः । तस्य गृहस्यान्तः अन्तर्वर्तिभूमण्डलमुपलक्ष्यते । तेनान्तरिति निर्देशः कविलक्षणम् । वस्तुतस्तु ब्रह्माण्डाद् बहिरपि हिरण्यगर्भस्य व्याप्तिः श्रूयते । किञ्च मनुष्यादेरपि देहो ब्रह्माण्डः स्थूलः । सूक्ष्मदेहस्तु चक्षुरादिद्वारा ध्रुवादिपर्यन्तं गच्छतीति प्र-त्यक्षम् । तस्माद् गृहस्थसाम्यं दर्शयितुमन्तरिति परिच्छेदनिर्देशः । गृह-पतिरिव गृहस्थ इव । स्वात्मयागम्; सुशब्दः सात्त्विकयज्ञसूचकः । सर्व-

जगत्पोषणं गृहस्थस्यापि परम्परया सम्भवति । भगवतः सर्वात्मकत्वात् साक्षात् सम्भवतीति सुशब्दार्थः । आत्मेति भगवत्स्वरूपम् । तस्मै यागः आत्मयागः । तं करोषि । अयं भावः—ब्रह्मादिस्तम्बपर्यन्ता जीवा भगवत आत्मानः । पूर्वमुक्तं च । तानुद्दिश्य भोजनद्रव्यत्याग आदित्येनैव क्रियते । सर्वान्नानां भगवत्कार्यत्वात् कारणत्वाच्च । अतः सर्वेभ्यो द्रव्यत्यागः स्वात्मयागः । तं करोषीति । सर्वयागश्चेति निरतिशयसामर्थ्यप्रदर्शनं भगवतः स्तुतिः ॥ २७ ॥

ननु स्तुतेर्गृहस्थसाम्यं पूर्णं न भवति । कुतः । अहोरात्रव्यवस्थाहेतुरादित्य इति प्रसिद्धत्वादित्याशङ्कयाह—

कृत्वा नक्तं दिनमिव जगद्बीजमाव्यक्तिकं यत्
तत्रैवान्तर्दिनकर! तथा ब्राह्ममत्यन्ततोऽल्पम् ।
दैवं पित्र्यं क्रमपरिणतं मानुषं चाल्पमल्पं
कुर्वन् कुर्वन् कलयसि जगत् पञ्चधावर्तनाभिः ॥ २८ ॥

हे भगवन्! पञ्चधा पञ्चप्रकारैः । आवर्तनाभिरहोरात्रनिमित्तैः । पौनःपुन्यनिमित्तमावर्तनमित्यहोरात्रयोर्निर्देशो गुणतः । जगत् कलयसि संयोजयसि । तथाहि—कृत्वा निर्माय । नक्तम् आव्यक्तिकस्य कारणाभिमानिनः रात्रिम् । कथमिव । दिनमिव अहरिव जाग्रत्कालमिव । प्रपञ्चः जगद्बीजमव्याकृतरूपमित्यर्थः । अथवाऽव्यक्तमव्याकृतं तस्य दिनमाव्यक्तिकं जगद्बीजम् । सर्वकारणमित्यर्थः । एकस्य ब्रह्मणो जन्मारभ्य तस्य मोक्षपर्यन्तः कालः आव्यक्ति(को? का)ह्नः दिनम् । तद्वन्नक्तमप्याव्यक्तिकं दिनेन समम् । एकस्मिन् ब्रह्मणि मुक्ते सति पुनर्ब्रह्माण्डान्तरोत्पत्तिपर्यन्तः काल आव्यक्तिकं नक्तम् । अथवा—

"पञ्च कल्पसहस्राणि द्विगुणान्यहरुच्यते"

इति मोक्षधर्मे वचनात् कल्पानां (सहस्राणां?) सहस्राण्यव्यक्तमूर्तेर्दिनम् । रात्रिरपि दिनसह(शमि? शी)त्यन्ये । एवम्भूतं दिनं नक्तं च कृत्वा विधाय । पुनः तत्रैवाव्यक्तिकदिने अन्तर्भूतम् । ब्राह्ममत्यन्ततोऽल्पम् । आव्यक्तिकाच्छतसंवत्सराद् दिवसार्धमिव न्यूनं सहस्रयुगपर्यन्तं ब्राह्मम् । हे दिनकर! तथा कृत्वा । अनन्तरं ब्राह्मं हैरण्यगर्भं नक्तं चतुर्युगाणां सहस्रम् ।

---

१.'अ' ख. पाठः. २. 'स्वदिनप' क. पाठः. ३. 'रं दैव' ख. पाठः.

एकधा नक्तं दिनं च इति पृथक् पृथक् सर्वत्र सम्बध्यते । अत्यन्ततोऽल्पमिति । अव्यक्तस्य नक्ताद्यपेक्षया ब्राह्ममत्यन्तमल्पम् । यथा तस्य शतसंवत्सरादत्यन्तमल्पं तस्याहः रात्रि(रिति) द्वयमेवमव्यक्तनक्ताच्चतुर्मुखस्य नक्तमिति । न्यूनमित्यर्थः । दैवमिति । दक्षिणायनं रात्रिः, उत्तरायणमहर्देवानाम् । तत्रैवान्तरिति पदम् । दैवे पित्र्ये मानुषे च द्रष्टव्यं क्रमेणाल्पत्वसूचनाय । अपरपक्षः पितॄणां रात्रिः । पूर्वपक्षः अहः । अतो दैवादल्पत्वम् । क्रमपरिणतं, क्रमेण परिच्छिन्नं त्रिंशन्नाडिकामात्रम् । अत एव स्थूलत्वं चानुमेयम् । मानुषं च क्रमपरिणतमत्यन्तन्यूनं प्रसिद्धम् । एतत् पञ्चविधं क्रमेण अल्पमल्पमिति वीप्सा । कुर्वन् कुर्वन्निति च वीप्सा । आव्यक्तिकमारभ्य यद् यदहोरात्रमल्पं तत्तत् कुर्वन् कुर्वन् जगत् कलयसि बध्नासि । एवं पञ्चविधाहोरात्राणां स्वरूपत्वान्नियन्तृत्वाच्चाचिन्त्यरूपशक्तिमानादित्य इति विद्यमानगुणकीर्तनं स्तुतिः ॥ २८ ॥

पञ्चविधाहोरात्राणां[३] निर्वर्तकस्य भगवतस्स्वरूपस्योदयास्तमयौ न स्त इति प्रतिपादितमिति[४] । यथा जगतः प्रकाशाप्रकाशहेतोरादित्यमण्डलस्य स्वदृष्ट्या उदयास्तमयौ न स्तः सदैकरूपप्रकाशत्वात्[५] । एवं निर्गुणस्य नित्यमुक्तत्वादुदयास्तमयौ न स्त इति प्रतिपादितम् । तस्य योगिभिः प्राप्यत्वेन स्तुतिः क्रियते—

तत्त्वालोके तपन ! सुदिने ये परं संप्रबुद्धा
ये वा चित्तोपशमरजनीयोगनिद्रामुपेताः ।
तेऽहोरात्रोपरमपरमानन्दसन्ध्यासु सौरं
भित्त्वा ज्योतिः परमपरमं यान्ति निर्वाणसञ्ज्ञम् ॥ २९ ॥

ये साङ्ख्याः[६] प्रबुद्धाः योगिनश्च[७] निद्रायुक्ताः उभयोरपि समत्वेन मोक्षं ददाति भगवानिति प्रतिपाद्यते । तथाहि—तत्त्वानि अनुमानागमसिद्धं तत्तद्भावं प्राप्तानि तत्त्वानि चतुर्विंशतिः । बाह्येन्द्रियाणि दश मन एकादश, पञ्च भूतानि, तेषां गुणाश्च शब्दादयः पञ्च, अहङ्कारो महानव्यक्तं चेति चतुर्विंशतिः । तेषामालोको द्विविधः । अवैदिकसाङ्ख्यानां प्रकृतिपुरुषविवेकज्ञानमालोकनम् । वैदिकसाङ्ख्यानां तु ब्रह्माभेदेन तेषा-

१. 'नु क' ग. पाठः. २. 'न्त्यश' क. पाठः. ३. 'णि' ख. पाठः. ४. 'तम् । तस्य' ग. पाठः. ५. 'ति साङ्ख्यैर्यो' क. पाठः. ६. 'ख्यप्र', ७. 'गांश्च', ८. 'द्राणाउ' ख. पाठः. ९. नादिशि' क. पाठः.

मालोकनम् । अपरोक्षता ब्रह्मणः प्रमाणोपपन्नत्वाद्, ब्रह्मैव तत्त्वं तेषामालोके । हे तपन! सुदिने यस्मिन् दिने महती सम्पत् सिध्यति तत् सुदिनम् । संसारनाशकत्वादात्मज्ञानं सुदिनम् । ये उभयविधसाङ्ख्या इत्यर्थः । परं निर्गुणं ब्रह्म तदधिकृत्य संप्रबुद्धाः निद्रां त्यक्तवन्तः । ये वा योगशीलाः अवैदिका वैदिकाश्च । चित्तस्योपशमो ब्रह्मणि प्रवेशः । स एव निद्रावन्निद्रा । अन्यपदार्थज्ञानाभावसाम्येन । रजनी रात्रिः संसारः । तस्यां योग एव निद्रा योगनिद्रा चित्तोपशमात् तामुपेताः समाधिस्थाः । ते उभे । अह्न उपरमः साङ्ख्यस्य संसारनाशः । योगस्य रात्र्युपरमः संसारनाशः । स एव सन्ध्यावत् सन्ध्या । संसारसमाप्तिरूपत्वात् । सन्ध्यां विशदयति— परमः सर्वस्मादुत्कृष्टः नित्यानन्दः । चतुर्मुखानन्दादप्यनन्तगुणत्वात् परमानन्दः । वेदे चोक्तमानन्दस्य परमत्वम् । स एव सन्ध्यावत् सन्ध्या । तासु । बहुवचनं मुमुक्षूणां बहुत्वाभिप्रायेण । सौरं सूर्यस्य सम्बन्धि पारमार्थिकम्[3] । ज्योतिः स्वप्रकाशं परिपूर्णम् । अथवा मण्डलस्य लिङ्गात्मा ज्योतिः । तद् भित्त्वा विदार्य । परमपरमं परस्मादपि कारणात् परममुत्कृष्टम् । निर्गुणं[4] विज्ञानघनम् । यान्ति गच्छन्ति । कीदृशम् । निर्वाणं मोक्ष इति संज्ञा यस्य[5] तत् तथोक्तम् । मुक्तिं गच्छन्तीत्यर्थः । साधकानां श्रेष्ठाः साङ्ख्या योगिनश्च । तैः प्राप्यत्वात् त्वत्तोऽधिकं देवतारूपं नास्तीति विद्यमानगुणकीर्तनं स्तुतिः ॥ २९ ॥

निर्गुणं तिष्ठतु । सगुणेऽपि[6] यादृशज्योतिर्भित्त्वा ब्रह्म गच्छति । तस्यापि रश्मिसारत्वादतिशयं दर्शयन् स्तौति—

आब्रह्मेदं नवमिव जगज्जङ्गमस्थावरान्तं
सर्गे सर्गे विसृजसि रवे! गोभिरुद्रिक्तसोमैः ।
दीप्तैः प्रत्याहरसि च लये तद् यथायोनि भूयः
सर्गान्तादौ प्रकटविभवां दर्शयन् रश्मिलीलाम् ॥ ३० ॥

आब्रह्म ब्रह्मणः[7] प्रजापतेरारभ्य वर्तत इत्याब्रह्म चतुर्विधप्राणिजातम् ।

---

१. 'नं प', २. 'तः', ३ 'तिः मण्डलं त' क. पाठः. ४. 'णं या', ५. 'गाश्च', ६. 'ति' ख. पाठः. ७. 'ह्मणः प्र' क. पाठः.

इदं प्रत्यक्षयोग्यम् । नवमिव नूतनमिव । यद्यपि शतायुषः पुरुषस्य देहादेरपि शतायुष्यं न्यायतः प्रसिद्धं, तथापि सुषुप्तौ सर्वस्य प्रपञ्चस्य प्रतिपुरुषं लयः श्रुतिप्रसिद्धः प्रातःकाले सर्गश्च । 'अहरहरिमाः प्रजाः ब्रह्म गच्छन्ति ।' 'यद्यद् भवन्ति तदा भवन्ती'ति लीनानामेव सर्गोऽपि प्रातःकाले प्रसिद्धः । तदपेक्ष्य नवमिवेत्युक्तम् । जगत् प्राणिजातमित्यर्थः । कीदृशम् । जङ्गमस्थावरान्तम् । बुद्धिपूर्वं गमनशीलं जङ्गमम् । अबुद्धिपूर्वं स्थितिशीलं स्थावरम् । उभयपर्यन्तम् । सर्गे सर्गे । व्याप्त्यर्थो वीप्सा । सर्गस्य कालः सर्गशब्देन लक्ष्यते । प्राणिनां कर्मणः उद्बोधकाले प्रातःकाले सुषुप्तिं प्राप्तजन्तूनामित्यर्थः । विसृजसि उत्पादयसि । हे रवे ! गोभिः रश्मिभिः । पूर्वोक्तपञ्चविधाहोरात्रनिर्वर्तकैः प्रसिद्धैरेवेति केचित् । उद्रिक्तसोमैः सम्पूर्णकर्मापूर्वरूपः सोमः आहवनीये हुतस्य सोमस्यादित्यमण्डलप्राप्तिः पूर्वमुक्ता । मण्डलं स्थूलं सूक्ष्मं च । तदुक्तं — 'सप्तार्धगर्भा भुवनस्य रेत' इत्यादिना । अमृतगर्भैरादित्यो रश्मिभिर्जगत् सृजति, तेजःपूर्णैः संहरतीति वेदार्थः । तदेव दर्शयति — दीप्तैरन्तर्गताग्निना ज्वलितैः गोभिः प्रत्याहरसि । आत्मानं कारणस्वरूपं प्रति आहरसि स्वीकरोषि सृष्टं जगत् । लये प्रलयकाले असाधारणप्रपञ्चः सर्वोऽपि लीयते सुषुप्ताविति श्रुतिः । यद्यपि सामान्येन लयः प्रतिपाद्यते दृष्टिसृष्ट्यङ्गीकारात्, तथापि साधारणप्रपञ्चः[1] स्थित इति न्यायेन साधितमन्यत्र । तदिति प्राणिजातमित्यर्थः[2] । यथायोनि आश्रयो योनिः कारणम् । तदनति क्रम्य (यस्मादाहनि?) तत्रैव लय इति भावः । भूय इति भूयोभूयः । कारणे लय इत्यर्थः । फलितमाह — सर्गान्तादौ सर्गस्य प्रतिदिवसभवस्य अन्तः सन्ध्याकालः निद्राभिमुखः प्राणिनां सर्गान्तः प्रलयकालः । आदिः सर्गस्य प्रातः प्रबोधकालः प्रकरणात् । तस्मिन्नपि । प्रकटविभवां प्रकटं स्पष्टीकृतं प्रत्यक्षं वैभवम् ऐश्वर्यं यस्या लीलायाः सा तथोक्ता । अनन्तदेहिनां सर्गहेतुत्वाद् ब्रह्मैवादित्य इति सूचितम् । अव्याकृतस्य प्रातःकाले विराट्चतुर्मुखपर्यन्तानां सर्गः अचिन्त्यरश्मिभिः तत्तदनुरूपैः । एवं प्रकटविभवां रश्मिलीलां सङ्कल्पतः सर्गे करोति भगवान् । सर्वप्राणिनां च स्वं स्वं सुषुप्तिकालः प्रलयः । जाग्रत्कालः सर्ग इति श्रुतिः । ब्रह्मरूपत्वं, तत्तत्कर्तृत्वेन भगवतो विद्यमानगुणकीर्तनं स्तुतिः ॥ ३० ॥

१. 'द्धः । अ' क. ख. पाठः. २. 'ञ्चस्थितिरिति' ख. पाठः. ३. 'र्थः । फलि' ग. पाठः.

सर्गकर्तृत्वप्रदर्शनमात्रेण न परिपूर्णा स्तुतिरित्याशङ्क्य परिपूर्णप्रयोजनां स्तुतिं दर्शयति —

श्रित्वा नित्योपचितमुचितं ब्रह्मतेजःप्रकाशं
रूपं सर्गस्थितिलयमुचा सर्वभूतेषु मध्ये ।
अन्तेवासिष्विव सुगुरुणा यः परोक्षः प्रकृत्या
प्रत्यक्षोऽसौ जगति भवता दर्शितः स्वात्मनात्मा ॥ २१ ॥

अनेन श्लोकेन सर्ववेदान्तसिद्धान्तरहस्यं प्रतिपाद्यते । अन्तेवासिष्विवेत्यत्रेवशब्दः सर्वश्लेषार्थः प्रथमं व्याख्यायते तात्पर्यविषयत्वेन प्राधान्यात् प्रतिपत्तिलाघवार्थं च । यथा कश्चिदाचार्यः शिष्यबुद्धावपरोक्षं ब्रह्म दर्शयति, तथा भगवानपि भक्तिमात्रेणेति प्रतिपाद्यते । श्रित्वा गुरुसेवां कृत्वा । नित्योपचितं निरन्तरं गुरुशुश्रूषया सञ्चितं शिष्यबुद्धिगतं तपः उ(प?)चितं न्यायतः प्राप्तं शुद्धमित्यर्थः । ब्रह्मतेजःप्रकाशं ब्रह्मणः परस्य विष्णोः तेजसा स्वप्रकाशेन प्रकाश्यत इति ब्रह्मतेजःप्रकाशं गुरुब्रह्मणोर्भेदाभावाद् गुरुसेवा ब्रह्मसेवा तज्जनितम् । रूपं रूप्यते प्रकाश्यते शास्त्रेणेति रूपम् । 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतिसिद्धम् । शिष्यगतं शुद्धमन्तःकरणपरिणामरूपम् । तदुपजीव्येति भावः । सर्गस्थितिलयमुचा । सर्गः मनुष्यादि(सृष्टिः) । स्थितिः संसरणम् । लयो मरणम् । तान् मोचयति नाशयति विद्याप्रदानेनेति सर्गस्थितिलयमुक् गुरुः तेन । सर्वभूतेषु । भूतशब्देन शिष्या विवक्षिताः । तेषु मध्ये । निर्धारणे सप्तमी । यस्य शिष्यस्य नित्योपचितं चित्ते तपोरूपं लब्धं, तदुपजीव्य । अन्तेवासिषु शिष्येषु । भूतानां विशेषणमेतत् । सुगुरुणा सुष्ठु ब्रह्मापरोक्ष्यमापादयति यो गुरुः स सुगुरुः । अपरोक्षज्ञानित्वात् । यः प्रसिद्धः स्वप्रकाशः । प्रकृत्या मायया परोक्षवत् परोक्षः आच्छन्नः मूलाज्ञानेनेत्यर्थः । प्रत्यक्षः अपरोक्षीभूतः । असौ परमात्मेत्यर्थः । जगति शिष्याणां बुद्धावित्यर्थः । भवता आदित्येन । हिरण्यगर्भावस्थां प्राप्तेन वा । दर्शितः प्रकाशगोचरतामापादितः । एवं गुरौ योजना । यः प्रकृत्या परोक्षः शिष्यस्यात्मा असौ गुरुणा जन्मस्थितिलयमुचा नित्योपचितमुचितं ब्रह्मतेजःप्रकाशम् । रूपं रूप्यत इति रूपं भक्तस्य चित्तगतं तपः ज्ञानोत्पत्तियोग्यतेति भावः । अथवा ब्रह्म रूप्यते ज्ञायते येन भक्त-

गतान्तःकरणवृत्त्या भगवत्प्रसादात् (ज्ञायते न?) तद् रूपमित्यर्थः। सर्गस्थितिलयमुचा भक्तस्य जन्म सर्गः, स्थितिः संसारित्वं, लयो मरणं, तान् नाशयतीति सर्गस्थितिलयमुक् भगवान्। सर्वभूतेषु मध्ये येषां चित्तगतं धर्मादिरूपं तदाश्रित्य तदनुसारेण तान् मोचयति। अत्र दृष्टान्तः — अन्तेवासिष्विव सुगुरुणेति। व्याख्यातम्। यः स्वयम्प्रकाशो जीवानां प्रत्यगात्मेत्यर्थः। प्रकृत्या मूलाज्ञानेन परोक्षः आच्छन्नः धूमेन दीपप्रभावत्। प्रत्यक्षः अपरोक्षीकृतः। असौ पूर्वं परोक्षः सन् जगति भक्तस्य बुद्धौ अपरोक्षीकृत इति सम्बन्धः। तत्कालविशेषणं भगवता आदित्येन करुणानिधिना भक्तवत्सलेन आपरोक्ष्यतिरोधानं नाशितमित्यर्थः। स्वात्मना स्वस्य लोकरक्षार्थं स्वीकृतदेहस्य आत्मा निर्गुणं ब्रह्म तद्रूपेण। आत्मा जीवानाम् आदित्यस्य चात्मा परमात्मा। सर्वदा ब्रह्म तद् भक्तचित्ते दर्शितमित्यर्थः। प्रकृत्या परोक्षोऽसौ भवता सर्गस्थितिलयमुचा गुरुणा प्रत्यक्षो दर्शितः। अन्तेवासिष्विव सुगुरुणेति योजना। स्वस्मिन् ब्रह्मरूपमानीय प्रपञ्चगततमोनिवर्तको भगवानिति योजयन्ति केचित्। 'यस्य देवे यथा भक्तिर्यथा देवे तथा गुरौ' इति वेदे देवतागुरुभक्ती समुचिते मोक्षसाधनमित्युक्तम्। तत्र समुच्चयं विनापि स्वयमेव गुरुभावं प्राप्य ददाति भगवानिति भगवद्गुणकीर्तनं स्तुतिः॥ ३१॥

अपरोक्षात्मत्वेन चेद् जीवानां ब्रह्मोपदिशति भगवान् स्वप्रकाशत्वादात्मनः तर्हि संसारित्वं विरुद्धमित्याशङ्क्याविद्यामाहात्म्यात् सम्भवतीति दर्शयितुमविद्यामाहात्म्यं दर्शयति --

लोकाः सर्वे वपुषि नियतं ते स्थितास्त्वं च तेषा-  
मेकैकस्मिन् युगपदगुणो विश्वहेतोर्गुणीव।  
इत्थम्भूते जगति भगवन्! न त्वदन्योऽस्मि सत्यं  
किन्तु ज्ञस्त्वं परमपुरुषोऽहं प्रकृत्यैव चाज्ञः॥ ३२॥

लोक्यन्त इति लोकाः। जीवशब्दवाच्या देहाः। लोकनं लोक इति जीवशब्दलक्ष्याश्च लोकाः। ते सर्वे। तव परमात्मनो वपुषि उभयविधे स्थूले सूक्ष्मे च। स्थिताः। निर्गुणमप्युपचारेण वपुः। त्वं च। साक्षी चिद्रूपः समस्तप्राणिनां प्रत्यगात्मेत्यर्थः। तेषां जीवानामित्यर्थः। एकैकस्मिन् प्रति-

देहं समाप्यावस्थितः[1] । यथा प्रतिबिम्बेष्वेक एव चन्द्रमा[2] व्यवस्थितः सर्वेषु[3] घटाकाशेषु महाकाशश्च, चेतनानां स्वरूपत्वेन स्थितः । युगपत् एकस्मिन् क्षण इत्यर्थः । अगुणः । गुणो माया तत्कार्यं च, तद्रहितोऽगुणः । हे विश्वहेतो ! । षष्ठी वा विश्वहेतोरिति । लोकसिद्ध्यर्थं गुणं त्रिगुणं मायारूपं गृह्णाति । तेन गुणीव गुणवानिव । इच्छादिगुणरहितोऽपि तद्वान् भातीत्यर्थः । अथवा गुणीव मायीवीव[4] । फलितमाह — इत्थम्भूते घटाकाशवदद्वितीयत्वे जीवब्रह्मणोरत्यन्ताभेदे सतीत्यर्थः । जगति जीवजाते एवंरूपे सतीत्यर्थः । हे भगवन् ! त्वदन्यो नास्मि । ब्रह्मव्यतिरिक्तो नाहम् । किन्तु ब्रह्मैवाहं सदा सत्यमिति वेदान्तैर्न्यायैश्च निश्चितमित्यर्थः । किन्तु तथापि ज्ञस्त्वं सर्वज्ञस्त्वम् आदित्यः । परमपुरुषः निर्गुणं ब्रह्मेत्यर्थः । अहं त्वदभिन्नोऽपि जीवो भिन्नश्च । प्रकृत्या स्वभावेन । अग्न्युष्णवादेत्यर्थः । अज्ञः अज्ञानी । एकस्याग्नेः शैत्यमुष्णत्वं च विरुद्धं युगपत् कथं करोषि । अशक्यमिति भावः । अथवा अहं प्रकृत्या मायया मूढः, न स्वतः । तस्मादेवंविधमायाप्रवर्तकत्वाद् निरतिशयशक्तिमांस्त्वमिति विद्यमानगुणकीर्तनं स्तुतिः । अथवा तव माया प्रकृतिः । तस्या माहात्म्यादेतद्वैचित्र्यम् । तथाहि — एक एव परमात्मा सर्वप्राणिशरीरेषु शास्त्रन्यायाभ्यां सिद्धः, तथापि जीवो दुःखी मूढः परिच्छिन्नः कृशः द्वन्द्वयुक्तो दरिद्रः स एव त्वं परमात्मा द्वितीयोऽपि तदैव सर्वज्ञः सर्वगतः, जीवश्च नित्यानन्दो नित्यमुक्तश्चेति परस्परविरुद्धं तव माहात्म्यनिमित्तं मायाया अचिन्त्यसामर्थ्यं लब्धमिति भगवन्माहात्म्यमहो वैचित्र्यमिति गुणकीर्तनं स्तुतिः ॥ ३२ ॥

एवंविधं चेन्महामायामाहात्म्यं, तत्परिहाराय किं साधनमित्याशङ्क्याह —

सङ्कल्पेच्छाद्यखिलकरणप्राणवाण्यो वरेण्याः
सम्पन्ना मे त्वदभिनमनाज्जन्म चेदं शरण्यम् ।
मन्ये चास्तं जिगमिषु शनैः पुण्यपापद्वयं वा
भक्तिश्रद्धे तव चरणयोरन्यथा नो भवेताम् ॥ ३३ ॥

इदमित्थंकरणीयमिति बुद्धिः सङ्कल्पः । तस्य स्वीकाराभिनिवेश इच्छा । लोभमोहादयः आदिशब्दार्थः । अखिलकरणानि सङ्कल्पादि-

१. 'प्य स्थि', २. 'स्समाप्य स्थि', ३. 'ष्वचका', ४. 'यीव' ग. पाठः.

धर्माणां धर्मीभूतानि मनआदीनि बाह्यानि च। (प्राणवाण्यः) प्राणवागादयः। वरेण्याः प्रार्थनीयाः। सम्पन्नाः गुणवत्त्वं प्राप्ताः। कारणमाह — त्वदभिनमनात् तव नमस्कारात्। फलान्तरं चाह — जन्म अस्य देहस्योत्पत्तिः। इदं शरीरं प्रत्यक्षम्। शरण्यम्। शरणमाश्रयः, तद्योग्यं शरण्यम्। भवति (इति) वाक्यशेषः। गुणान्तरमाह — मन्ये निश्चयेन जानामीत्यर्थः। अस्तं विनाशम्। जिगमिषु गन्तुमिच्छु। शनैः क्रमेण। किम्। पुण्यपापद्वयम्। चार्थे वाशब्दः। मम सर्वे गुणास्तव नमस्कारेण प्राप्ता इति प्रतिज्ञा। अत्र हेतुः भक्तिश्रद्धे। भक्तिः स्नेहबहुमानविश्वासेन सह भजनम्। श्रद्धा तत्रास्तिक्यबुद्धिः। तव सवितुः। चरणयोः पादपद्मे। व्यतिरेकमाह — अन्यथेति। यदि मम सङ्कल्पादयः मम नमस्कारोऽपि दुष्टाः, तर्हि मम भक्तिश्रद्धे न स्याताम्। ते तु दृश्येते। तस्मात् तव भजनं दृष्टफलम्। तस्मादतिक्रूरापि माया भगवद्भक्त्यादिना नश्यतीति गुणकीर्तनं स्तुतिः ॥३३॥

(विधानत्वं ?) लोकानां भगवद्भक्तौ प्रवृत्तिजननार्थम्। अविद्यायाः सर्वप्राणिनां दुःखैकहेतुत्वं दृष्ट्वा दयानिमित्तं लोकानामविद्यानिवर्तने स्वस्य सामर्थ्यं याचते साम्बः। (अथवा) उत्तमत्वात् स्वदुःखमनूद्यापि परसुखं वाञ्छते साम्बः —

सत्यं भूयो जननमरणे त्वत्प्रपन्नेषु न स्त-
स्तत्राप्येकं तव नुतिफलं जन्म याचे यदीत्थम्।
त्रैगुण्येशः शम इव परः पुण्यकायोऽप्ययोनिः
संसाराब्धौ प्लव इव जगत्तारणाय स्थिरः स्याम् ॥३४॥

सत्यं परमार्थमेतन्मनुवचनं वेदवचनं च भक्तौ सत्यां मोक्षं गच्छतीति। भूय इति पुनर्जन्मेत्यर्थः[1]। यस्मिन् जन्मनि भक्तिरुत्पन्ना तस्मिन्नेव मुक्तिर्निश्चयेन भवेदेव। कुतः जननमरणाभावात्। त्वत्प्रपन्नेषु। सूर्यभक्तेष्वित्यर्थः। जननमरणे, न स्त इति सम्बन्धः। तत्रापि जननमरणाभावेऽपि। एकं जन्म तव नुतिफलं भगवत्स्तुतिफलत्वेन याचे प्रार्थयामि। किन्तु यद्येवमित्थं वक्ष्यमाणलक्षणं चेज्जन्म, तर्हि याचे। अन्यथा नेत्यर्थः। कथम्। त्रैगुण्यं गुणत्रयस्य सत्त्वरजस्तमसां भावस्त्रैगुण्यं सुखदुःखहेतुः तस्येशः

---

१. 'प्रज्ञा' ग. पाठः.

स्वतन्त्रो भवामि । अविद्यादिपञ्चक्लेशजयो भवति गुणत्रयजये । स तु मोक्षधर्मे द्रष्टव्यः । जितगुणत्रयस्य दृष्टान्तः शम इव पर इति । अभिजातः शमो विग्रहवान् वर्तत इति लोकानां बुद्ध्युत्पत्तिहेतुरित्यर्थः । किञ्च पुण्यकायः क्षुत्पिपासादिपीडारहितः । किञ्च अयोनिः गर्भपात्रे प्रवेशो योनिसम्बन्धोऽतिकष्टः स मा भूदिति संसारदोषः सूत्रितो लोकस्य वैराग्यार्थम् । नन्वयोनिजोऽपि देहो दुःखहेतुरवश्यं तत्र प्रार्थनं जाड्यमित्याशङ्क्याह — संसाराब्धौ यो(न्ये ? नेः) योन्यन्तरप्राप्तिः संसारः । स एव समुद्रवत् कामक्रोधलोभमोहादिग्राहपूर्णत्वात् विश्रमस्थलाभावाच्च प्राणिनां समुद्रः । तत्र पतिता लोकाः सर्वे प्रायेण यस्मात्, तस्मात् तत्र प्लव इव । दृढतरमहा(नावमिव ? नौरिव) । जगत्तारणाय सर्वप्राणिनां मोक्षोत्पादनाय । स्यां भवामीत्यर्थः । अयं भावः — ब्रह्मविद्यां विना प्राणिनां दुःखनिवृत्त्यर्थमुपायाभावादुपदेष्टुरपि दुर्लभत्वादनन्तदुःखं सर्वदा । तस्माद् दुःखात्मकमपि देहं गृहीत्वा सुखश्रद्धां च परित्यज्य वेदान्तव्याख्यानाय देहग्रहणं भवतु मम ॥ ३४ ॥

स्वदुःखमनूद्यापि परसुखे प्रवृत्तिरुत्तमानां कर्तव्येति लोकरक्षार्थं सात्त्विको देहः प्रार्थितामित्युक्तम् । एतत्प्रार्थनमुपपन्नम्, आदित्योऽपि स्वस्य महद्दुःखम(वि)गणय्य रक्षाशीलो यस्मादित्याह —

> सौषुम्नेन त्वममृतपथेनेत्य शीतांशुभावं
> पुष्णास्यग्रे सुरनरपितॄन् शाम्यतोभिः कलाभिः ।
> पश्चादम्भो विशासि वसुधाश्चौषधीस्तद्गतोऽपि
> प्रीणास्येवं त्रिभुवनमतस्ते जगन्मित्रतार्क ! ॥ ३५ ॥

स्वस्यापत्कालेऽपि परं रक्षति यः स सर्वत्र मित्रम् । एवं भगवत्स्वभावत्वात् मित्रशब्दो भगवति मुख्य इति श्लोकेन प्रतिपाद्यते । चन्द्रादित्ययोरेकत्वमङ्गीकृत्य निर्देशः । सुषुम्नायां भवो मार्गः सौषुम्नः तेन । त्वमादित्य इत्यर्थः । चन्द्रादित्ययोरेकत्वविवक्षायां त्वंशब्दो द्रष्टव्यः । ऐश्वर्यवशाज्जगत्परिपालनार्थं चन्द्ररूपेण स्थितो रविः, तेन त्वमिति निर्देशः कृतः । अमृतपथेन अमृतस्य हुतस्याकाशे चन्द्रपर्यन्तं वर्धनहेतुत्वादमृतपथः सुषुम्नामार्गः तेन । अयमर्थः—व्यष्टिसमष्टिरूपो यजमानः तस्यादित्यस्वरूपं

---

१. 'विविधा' ग. पाठः.

हविः अग्नौ हुतं हविर्विराट्पुरुषस्य हृदये सुषुम्नाद्वारेण गत्वा सूक्ष्मरूपेणादित्यं गत्वा ततः शीतांशुभावं चन्द्रस्वरूपं प्राप्य पुष्णासि पोषयसि । सर्वप्राणिदेहरक्षां करोषि । अग्रे । स्थावरपोषणात्पूर्वमित्यर्थः । सुरनरशब्देन ऋषयोऽपि गृहीताः । पितॄंश्च क्रमेणापरपक्षे पञ्च पञ्च दिनानि देवर्षिपितॄन् पुष्णासीति पूर्वमुक्तं शास्त्रे प्रसिद्धम् । पश्चादनन्तरमित्यर्थः । शाम्यतीभिः कलाभिः देवादिभिर्भक्ष्यमाणत्वात् समाप्तें गच्छन्तीभिः सह । लौकिकं पयः । विशसि । यथा लोके अग्निना तप्तः पुरुषः तापशान्त्यर्थं जलं प्रविशति, एवं त्वमपि सोमरूपत्वात् लोकानां जठराग्निना प्राप्ततापनिवृत्त्यर्थम् अम्भो विशसि । तत्रापि भगवन्निरूपणमन्यविलक्षणम् । आपन्नः स्वस्य रक्षां विना न पररक्षार्थं प्रवर्तते लोके । त्वं तु महागुणैस्त्वाच्चिन्तयसि — हा कष्टं मया स्थावराणां भोजनमात्तमिति पश्चात्तापेन सञ्चिन्त्य तद्गतोऽपि तापावस्थां प्राप्य जलं प्रविष्टोऽपि ओषधीः शालीगोधूमाद्याः । प्रीणासि वर्धयसि, लोकरक्षार्थम् । तेन ओषधिद्रव्येण होमबलिभक्षणादिना त्रिभुवनस्य प्रीणनात् तृप्तिः प्रसिद्धा शास्त्रेषु यस्माद् , अतस्ते जगन्मित्रता । स्वकार्यहानिमनूद्यापि यः पररक्षां करोति स मित्रम् इति प्रसिद्धिः । तस्मान्मित्र इति भगवतो नाम परमार्थविषयः । हे अर्क ! तस्मान्ममापि जन्मयाचनमुपपन्नमिति भावः । सर्वरक्षाहेतुत्वात् स्तुतिः ॥ ३५ ॥

भगवतः प्रकारान्तरेण जगद्रक्षां दर्शयन् ब्रह्मज्ञानप्रार्थनां करोति—

मन्दाक्रान्ते तमसि भवता नाथ ! दोषावसाने
नान्तर्लीना मम मतिरियं गूढनिद्रा जहाति ।
तस्मादस्तङ्गमिततमसा पद्मिनीवात्मभासा
सौरीत्येषा दिनकर ! परं नीयतामाशु बोधम् ॥ ३६ ॥

हे भगवन् ! भवतो भक्तस्त्रीणां बोधदानं दृश्यते, तस्मान्मम मतेरपि बोधः दीयतामिति प्रार्थना । तथाहि मन्दम् अल्पं भवति यथा तथा आक्रान्ते आरूढे । पद्मे आदित्यरश्मिवद् भवता स्वप्रकाशब्रह्मरूपेण मम चित्ते यदा मन्दाक्रमणं, तदा मूलाज्ञानं मन्दमाक्रान्तं मनसि । तदुच्यते तमसि मन्दाक्रान्त इति । यदा तु भगवत्स्वरूपेण चित्ते दृढमाक्रमणं, तदा तमः अज्ञानं संसारकारणं सर्वं नश्यतीति भावः । हे नाथ ! दोषावसाने

दोषाणां चित्तगतरागद्वेषादिदोषाणामवसानं समाप्तिः सन्ध्याकालः तदा। अन्तः हृदयपुण्डरीकस्य कोटरे छिद्रे लीनां प्रविष्टां गूढनिद्राम् अनाद्यज्ञानरूपां न जहाति मम मतिः। यस्मादेवं, तस्मादस्तङ्गमितं कालत्रयेऽपि विनष्टं तमो मूलाज्ञानं यस्मिन् सः अस्तङ्गमिततमाः तेन भगवद्रूपेणेत्यर्थः। पद्मिनीव पङ्कजमिव। इवशब्दः सर्वसंश्लेषे वर्तते। आत्मभासा आदित्यस्वरूपतेजसा ब्रह्मरूपेणेत्यर्थः। सौरी सूर्यभक्ता भजनशीलेत्यर्थः। हेताविति-शब्दः। यस्मात् सौरी, तस्मात् हे दिनकर! समस्ततमोनिवर्तक! परं ब्रह्मेत्यर्थः। नीयतां प्रेर्यताम्। आशु शीघ्रं क्रियाविशेषणम्। बोधं चित्तगतं ब्रह्मज्ञानमित्यर्थः। बोधं परं प्रत्याशु नीयताम् इति प्रार्थना। द्विकर्मकम्। अजां ग्रामं नयतीतिवत्। एवं पद्मिन्यां सर्वश्लेषः दोषावसाने रात्रिसमाप्तौ प्रातःकाले किरणानां पद्मिन्यां मन्दमाक्रमणमस्तम(सो ? ये)ऽपि मन्दमवस्थानं पद्मोदरे स्यात्। तत्र पद्मविकासोऽपि मन्दः। आन्तरतमसा गूढेन निद्रावदवस्थानात्। तां न जहाति पद्मिनी। सौरीतिहेतुः सूर्यमनुकरोतीति। यत्र सूर्यस्य मन्दाक्रमणं तत्र मन्दं तदवस्थापयति, यत्र दृढं रश्मिप्रवेशः तत्र तमः सर्वं नाशयाति पद्मिनी यस्मात्, तस्मादस्तङ्गमिततमसा आदित्यतेजसा बोधं नीयतामिति प्रार्थनायोग्यत्वेन स्तुतिः॥ ३६॥

प्रार्थितेऽर्थे उत्तरश्लोकेन हेतुमाह —

येन ग्रासीकृतमिव जगत् सर्वमासीत् तदस्तं
ध्वान्तं नीत्वा पुनरपि विभो! तद्दयाघ्रातचित्तः।
धत्से नक्तंदिनमिव गती शुक्लकृष्णे विभज्य
त्राता तस्माद् भव परिभवाद् दुष्कृताद् देव! भानो!॥

अस्य श्लोकस्य स्थूलार्थः प्रदर्श्यते प्रथमम्। येन नैशेन तमसा ग्रासीकृतं कबलीकृतं ग्रस्तमिव जगत् त्रैलोक्यमित्यर्थः। सर्वं प्राणिनां शरीरमित्यर्थः। आसीद् बभूव। तदेति तम इत्यर्थः। अस्तं नाशं नीत्वा। ध्वान्तं बाह्यं तम इत्यर्थः। तद् ध्वान्तमस्तं नीत्वेति सम्बन्धः। पुनरपि। एकस्मिन्नुपकारे कृतेऽपि हे विभो! तद्दया तेषामनुग्राह्याणां प्राणिनां दया, अथवा तान् प्रति या दया तया आघ्रातं संसृष्टं प्रविष्टं चित्तं यस्य भगवतः

---

१. 'मः स्था' ग. पाठः.

स तद्दयाघ्रातचित्तः । न तमोनिवृत्तिमात्रेणालम्बुद्धिः, किन्तु परलो(क-म?को)पि प्राणिभ्यो दातव्यो मयेति मत्वा धत्से धारयसि पुष्णासि च । किम् । ग(ते?ती) फलरूपे गम्येते आभ्यामिति गती । किंलक्षणे । शुक्लकृष्णे । शुक्लं देवयानम् ।

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।"

इत्याद्या । (कृष्णं) पितृयाणम् ।

"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।"

इत्याद्या स्मृतिः । ते विभज्य उपासकानां देवयानं केवलकर्मिणां पितृयाणमिति विभागेन धत्से । आदित्यानुग्रहं विना फलं न सेत्स्यतीति भावः । किमिव, तत्राह — नक्तंदिनमिव । यथा प्राणिनां नक्तं रात्रिरहश्च दिनमुभयमादित्यानुग्रहं विना न लभ्यते लोकस्य, एवं लोकद्वयमपीत्यर्थः । यस्मादेवं रक्षाशीलः, तस्मात् त्राता रक्षिता भव । परिभवात् जननमरणादिसंसारक्लेशात् । दुष्कृतात् पापरूपात् । हे देव! भानो! नित्यप्रकाशरूप! । इदानीं सूक्ष्मार्थः कथ्यते — येन ध्वान्तेन मूलाज्ञानेन आत्मन्याश्रयविषयभावेन स्थितेनेत्यर्थः । प्रासीकृतमाच्छन्नं भक्षितमिव । किम् । (जगत् ।) जगच्छब्देन जीवा विवक्षिताः । तेषां पारमार्थिकस्वरूपभूतं ब्रह्माज्ञानेन भक्षितमिव प्राणिनां न प्रतीयते, तेन सर्वानर्थ इति भावः । सर्वं ब्रह्मादिस्तम्बपर्यन्तं प्राणिजातमित्यर्थः । ननु हिरण्यगर्भस्याज्ञानं नास्ति उत्पन्नविद्यत्वात् । तन्न । प्रारब्धबलात् प्रपञ्चाभिमानात् । अज्ञानं विना न चाहङ्कारः । अहङ्कारं विना न जगद्धारणम् । तस्मात् प्रपञ्चधारणात् तस्याप्यज्ञानमस्तीति भावः । आसीति न भूतार्थविवक्षा, किन्तु पादपूरणार्था । अथवा मोक्षादर्वागित्यर्थः ज्ञानोत्पत्तेर्जीवानां स्वरूपाच्छादकं यस्मात्, तद् ध्वान्तमज्ञानम् अस्तं विनाशं नयसि भक्तानामुत्तमानाम् । ध्वान्तमिति मूलाज्ञानस्य नाम । तदस्तं नीत्वा ब्रह्मविद्यादानेन नाशयित्वा । पुनरपि मध्यमानां भक्तानां हे विभो! तद्दया तान् प्रति वर्तमाना दया तया आघ्रातम् आभीक्ष्ण्येन प्रविष्टं चित्तं यस्य करुणानिधेः स तद्दयाघ्रातचित्तः । विभज्येति । अयमर्थः — उत्तमा वर्तमाने देहे भक्तिबलान्मुक्तिं गच्छन्ति । मध्यमास्तु प्रारब्धकर्मभिः प्रतिबद्धास्तिष्ठन्ति । तान् विभज्य फलदानाय

१. 'पेण ग' ग, पाठः

लोकान्तरं नेतुं प्रवृत्तः । तेषां फलभोगानन्तरं गती फलरूपे शुक्लकृष्णे विभज्य धत्से । 'धेट् पाने ।' भक्षयसि संहरसि तेषां कर्माणि फलं च ज्ञानाग्निना संहरसि । कथमिव । आह—नक्तंदिनमिव । यथा मुक्तानां मूलध्वान्तविनाशेन पञ्चविधं नक्तं दिनं च संहरसि, तद्वत् शुक्लकृष्णे गती च धत्से । मध्यमानां संहरसि प्रयत्नेन । तस्मात्, त्वत्सदृशो भक्तानुग्रहशीलो नास्ति यस्मात्, त्राता भव । ब्रह्मविद्यादानेन रक्षिता भव परिभवात् । संसारसमुद्रे पञ्चक्लेशैः परिभवः प्राणिनामिव ममापि । हे देव! तस्मात् परिभवात् त्राता भव । अप्रतिहतस्वातन्त्र्याश्रय! भानो! दी(स्त? प्त)ज्ञानाश्रय! । मोक्ष एवानेन श्लोकेन प्रार्थ्यते । अध्यात्मगर्भमित्युत्तरत्र विशेषणादयमेवार्थः ॥ ३७ ॥

मोक्षप्रदो भगवानित्युक्तं, लोकानामपि संसारे सुखाभावाद् भगवद्भजनमेव योग्यं घृणानिधित्वाद् भगवत इत्याह —

आसंसारोपचितसदसत्कर्मबन्धाश्रितानामाधिव्याधिप्रजननमरणक्षुत्पिपासार्दितानाम् ।
मिथ्याज्ञानप्रबलतमसा नाथ! चान्धीकृतानां
त्वं नस्त्राता भव करुणया यत्रतत्र स्थितानाम् ॥ ३८ ॥

आसंसारम् । आङत्राभिविधौ । संसारे सर्वत्रेत्यर्थः । उपचितं चित्ते सञ्चितं, सदा आपादितमिति भावः । सदसत्कर्म सत्कर्म पुण्यम् असत्कर्म पापं सदसत्कर्म मिश्रं तदेव बन्धः प्राणिनां पारवश्यहेतुः । तेन आश्रितानां प्रविष्टानाम् । आधिः शोको मनोदुःखमित्यर्थः । द्विविधं देहस्य दुःखहेतुर्व्याधिः । प्रजननं गर्भपात्रान्निःसरणम् । मरणं प्राणवियोगः । तीव्रदुःखहेतुत्वं तयोः प्रत्यक्षमपि तैर्न स्मर्यते अविवेकात् । तेन विवेका(र्थे? र्थं) निर्देशः । पुनःपुनरनन्तानि जन्मानि सुखदुःखहे(तू? तुभूता)नि निरूपणीयानीति भावः । क्षुत्पिपासा ब्रह्महत्यादिपापार्जने कारणभूते क्षुत्पिपासे इति भावः । तेन अर्दितानां ध्वस्तदेहानामित्यर्थः । सर्वस्यानर्थस्य कारणभूतं महादोषमाह— मिथ्याज्ञानप्रबलतमसेति । मिथ्या अविद्यमानं वस्तु तदतदस्तीति बोधकं मिथ्याज्ञानं तस्य कारणं मूलाज्ञानं च तन्त्रेणोच्यते । प्रबलं वसिष्ठादीनामपि भ्रान्तिहेतुः, पुत्रमरणनिमित्तनदीपातादिसाहसबुद्धि-

---

१. 'णं म' ग. पाठः.

हेतुत्वात्। तमोवत् तमः। यथामावास्यारात्रौ वर्षाकाले पान्थस्य सर्वदिङ्मो-हनं तमः, यथावा जात्यन्धस्य तिमिरपटलग्रस्तं चक्षुः, एवमस्माकं परिपूर्णं चक्षुरात्मा। तस्याच्छादनेनाहं मनुष्यः कर्ता दुःखीत्यादिभ्रान्तिहेतुत्वात् प्रबलं तमः तेन तमसा। हे नाथ! अनाथानां पालक! अन्धीकृतानां स्वतो बोधरूपाणामपि बोधनाशे कारणं तम इत्यर्थः। तद्वतां त्वं सर्वतमो-निवर्तकः आदित्यो यस्मात्। त्राता रक्षिता। आत्मज्ञानेन तमोनिवर्तको भव। तदेव देहिनां रक्षेति भावः। करुणया दयानिमित्तम्। अत्र हेतु यत्रतत्र स्थितानां मरणादूर्ध्वं परवशानां नरके स्वर्गे पश्वादौ वा यथा कर्म-स्थितिः तथा मरणात् पूर्वमपि शत्रुगृहे वने मरुभूमौ वा नः अस्माकं दैवेन नीयमानता प्रत्यक्षेति भावः॥ ३८॥

दुःखितेषु घृणा भगवतः स्वभाव इत्युक्तम्, इतश्च वयं दुःखिता इत्याह—

सत्यासत्यस्खलितवचसां शौचलज्जोज्झिताना-
मज्ञानानामफलसफलप्रार्थनाकातराणाम्।
सर्वावस्थास्वखिलविषयाभ्यस्तकौतूहलानां
त्वं नस्त्राता भव पितृतया भोगलोलार्भकाणाम्॥ ३९॥

अहं बालः। तस्मात् पितृवत् त्राता भव इति प्रतिपाद्यते। बाल-साम्यमाह— सत्यात् परमार्थवदनात् असत्याच्चानृतात् स्खलितं परिभ्रष्टं (वचनं) येषां यथा बालानां सत्यवदने प्रवृत्तानां बलात् स्खलितं विनष्टं सत्यं भवति वचनं, तथा असत्यवदने प्रवृत्तानां बलात् सत्यं भवति वचनं बालानाम्। एवं वृद्धानामपि वचनमज्ञानात्। द्वाभ्यां स्खलितं यस्मात्, तस्माद् वयं बाला इत्यर्थः। इतश्च बालाः। शौचं शुद्धिः सङ्करवर्जनम्। लज्जा ह्रीः अनाचारशङ्का। स्वतः ते उज्झिते परित्यक्ते यैस्ते शौचलज्जोज्झिताः तेषाम्। बालानामुभे न स्तः। एवं वृद्धानां मोहवशात् शौचलज्जे न स्तः। इतश्च बाला इत्याह— अज्ञानानाम्। कर्तव्यं न जानन्ति बालाः। एवं-कर्तव्याज्ञानात् वयं वृद्धा अपि बालाः। अत्र हेतुः अफलसफलप्रार्थ-नेति। अफलं प्रयोजनशून्यं याचन्ते बालाः चन्द्रं देहीति पितरं प्रति

१. 'द्रकारणं त' ग. पाठः.

सफलं मोदकं च देहीति । एवमर्थकामावेव प्रार्थयते युवा न ज्ञानमोक्षौ कदाचित् । अतस्तदभिनिवेशनिमित्तं कातराणां दुःखितानाम् । तेन बालसाम्यम् । इतश्च बालाः । सर्वावस्थासु सुखावस्थायां दुःखावस्थायां च । अखिलविषयाणामभ्यासनिमित्तं बुद्धौ जातं कुतूहलमिति श्रद्धाजाड्यं, तदेव कौतूहलम् । स्वार्थे तद्धितप्रत्ययः । तद्वताम् । स्वभावसिद्धं बालानां कुतूहलम् । एवं वृद्धानामस्माकं हृदि कौतूहलमनलंप्रत्ययो वर्तते तत् तस्माद् बालाः । त्वमादित्य इत्यर्थः । नः बालसदृशानामित्यर्थः । त्राता रक्षिता भव । पितृतया पितृभावेन स्थित्वा ताडनादिना पिता बालं रक्षति हितोपदेशेन । एवमस्माकं प्रवृत्तिं विना बाल्यं दृष्ट्वा रक्ष । अत्र हेतुः भोगलोलार्भकाणामिति । भोगे लोलाः चपलाः । सन्निहितविषयपरित्यागाशक्ताः । अत एवार्भका बालाः । सर्वपितृत्वं वेदे प्रसिद्धं भगवतः यजमानरूपत्वात् । तस्मात् पितृवदात्मज्ञानेन मां पाहीति भावः ॥ ३९ ॥

परिपालनं तु शीघ्रं कर्तव्यमित्याशङ्कयाह —

यावद् देहं जरयति जरा नान्तकादेत्य दूती
नो वा भीमस्त्रिफणभुजगाकारदुर्वारपाशः ।
गाढं कण्ठे ग्रसति सहसा जीवितं लेलिहान-
स्तावद् भक्ताभयद! सदयं श्रेयसे नः प्रसीद ॥ ४० ॥

यावन्मृत्योर्व्यापारत्रयं न देहे सम्बध्यते, तावत् पाहीति प्रार्थ्यते । यावद् यादृशकालागमनात् पूर्वमित्यर्थः । देहं स्थूलम् । न जरयति । जरा नाम पिशाची रक्तं मांसं च भक्षयित्वा देहं शोषयति । न जरयति अन्तकान्मृत्योः सकाशादित्यर्थः । एत्य आगत्य मत्सकाशम् । दूती यमस्य भृत्या । हेत्वन्तरमाह । नो वा वाशब्दो विकल्पसूचकः । भीमः भयङ्करः । अत्र दृष्टान्तः त्रिफणः त्रिशिराः (भुजगः) क्रूरसर्पः । तस्याकार इवाकारो यस्य सः त्रिफणभुजगाकारः । अतएव दुर्वारपाशः यमस्य रज्जुः केनापि निरोद्धुं न शक्यत इति । दोषान्तरं पुनरप्याह — गाढमिति । मृदुवेधे पाशनिमित्तं दुःखमल्पं स्यात् । मरणे तु न तथा । अतिकष्टं पाशवेधनं दृढं तेन दुः(ख? खं) समु(द्रं? द्रवद्) भवतीत्यर्थः । कण्ठे बद्धपाशस्य

१. 'मेकादशेन्द्रियाणामभ्या' ग. पाठः. २. 'तं यत् कुतूहलं स्वा' ख. पाठः. ३. 'मृत्योः । हे' ग. पाठः.

व्यापारः कथ्यते। सहसा असम्भावितमिव। यद्यपि श्लेष्मादिना गत्यागतिनिरुद्धेन विलम्बेन जीवितं भक्षयति, तथापि सर्वैरस्मरणात् सहसेति निर्देशः। जीवितं जीवस्य सूक्ष्मशरीरमित्यर्थः। लेलिहानः अतिश्रद्धया भूयो भूयः आस्वादयन् पाशश्चेतनरूपः पाश इति भावः। तावदिति। तस्मात् कालात् पूर्वमित्यर्थः। हे भक्ताभयद! अभयं मोक्षं भक्तानां ददातीति भावः। सदयं दयापूर्वकं श्रेयसे मोक्षाय प्रसीद अनुगृहाण॥ ४०॥

यावन्मरणदुःखं नागच्छति, तावत् प्रसीदेत्यतिप्रमादरूपः संसार इत्युक्तम्। इतश्च कष्टात् संसारात् पाहीत्याह —

विश्वप्राणग्रसनरसनाटोपकोपप्रगल्भं
मृत्योर्वक्त्रं नयनदहनोद्दामदंष्ट्राकरालम्।
यावद् दृष्ट्वा व्रजति न भयात् पञ्चतामेष काय-
स्तावन्नित्यामृतमय! रवे! पाहि नः कान्दिशीकान्॥

विश्वस्य समस्तप्राणिनः प्राणानां सूक्ष्मशरीराणां ग्रसने भक्षणे प्रवृत्ता रसना या जिह्वा सा विश्वप्राणग्रसनरसना, तस्याः आटोपः सम्भ्रमेण चलनं तेन कोपेन तीक्ष्णेन विकारेण च प्रगल्भम् अतिधृष्टं, दुर्निरीक्ष्यमित्यर्थः। किम्। मृत्योर्वक्त्रं मारकस्य मुखं विशेष्यम्। पुनरपि रौद्रतामाह — नयनदहनोद्दामदंष्ट्राकरालं नयनेषु वर्तमानः पावको नयनदहनः तेन उद्दामः उदित्यूर्ध्वदेशं[1] प्रति ज्वलनं, दामनिमित्तं प्रतिफलनं पूर्वस्माच्चतुर्गुणं ज्वलनाधिक्यं नयनदहनस्य स्यात्। मृत्योरष्ट धवला दंष्ट्राः सन्ति। तेषां प्रत्यक्षभेदेन प्रतिफलनादनेकत्वं दंष्ट्राणाम्। ताभिः (भीषणं ?) करालं भयङ्करं वक्त्रम्। यावत् यस्मिन्काले। दृष्ट्वा प्रत्यक्षेणोपलभ्य। म्रियमाणस्य द्रष्टुं शक्यते मृत्योर्मुखम्। व्रजति गच्छति। भयाद् भीतिनिमित्तम्। पञ्चतां पञ्चत्वमिति मरणे प्रसिद्धम्। एषः प्रत्यक्षसिद्धः। इतः पूर्वं रक्षितः काय इत्यर्थः। तावत् ततः पूर्वमित्यर्थः। हे नित्यामृतमय! नित्यानन्दरूप!। सर्वदुःखनिवर्तक! मरणमात्रेणेति भावः। हे रवे! नित्यबोधस्वरूप! नः अस्मान् शीघ्रं पाहि। कीदृशान्। कान्दिशीकान् मरणकाले का दिङ् मम गन्तव्येति

१. 'रपि स्म', २. 'शज्व' क. ख. पाठः.

सर्वदिक्षु संश(यतामि? यितानि)त्यर्थः। मृत्योर्वक्त्रं दृष्ट्वा यावदेष कायः पश्वतां न व्रजति तावत् कान्दिशीकान् नः पाहीत्यन्वयः। आत्मज्ञान-दानं बालानामित्युक्तं मरणानन्तरं मार्गनेता भगवानिति गुणकीर्तनं स्तुतिः॥ ४१॥

इतश्च मरणकाले रक्षाहेतुर्भगवानिति सूचयति—

**शब्दागारं वियदिव वपुस्ते यजुस्सामधाम्नः**

**सप्तच्छन्दांस्यपि च तुरगा ऋङ्मयं मण्डलं च।**

**एवं सर्वश्रुतिमयतया मद्दयानुग्रहाद्वा**

**क्षिप्रं मत्तः कृपणकरुणाक्रन्दमाकर्णयेमम्॥ ४२॥**

अयमर्थः—शब्दानां वाक्यादीनाम् अगारं गृहमाश्रयः। वियद् भूताकाशम्। सर्वे शब्दाः कारणभूतवियदाश्रयाः। वियच्च सर्वगतं निरवयवं नित्यशुद्धं प्रपश्चदोषैरसंस्पृष्टं सर्वप्राणिनां श्रोत्रस्योपादानत्वात् श्रोत्रभूतं च वियत्। तद्वद् भगवतो वपुरपि सर्वगतं निरवयवं नित्यशुद्धं प्रपश्चदोषैर-स्पृष्टं यस्मात्। इतश्च शब्दात्मकं वपुस्ते यजुःसा(मयोः? म्नोः) धाम गृहम्। वेदयोराश्रयत्वाच्च श्रुतिरूपमादित्यस्वरूपमित्यर्थः। उपकरणमपि श्रुति-रूपमित्याह— सप्तच्छन्दांसि गायत्र्यादीनि। शब्दविशेषत्वात् तान्यपि श्रुतिः। हेत्वन्तरसूचकोऽपिशब्दः। आदित्यरथप्रवृत्तिहेतुत्वात् छन्दसा-मश्वत्वं पूर्वं सूचितम्। मण्डलस्य ऋङ्मयत्वश्रवणाच्च श्रुतिरूपत्वम्। फलितमाह— एवमुक्तप्रकारेण। सर्वश्रुतिमयतया सर्वश्रुतिरूपत्वात्। श्रुतिरिति शब्देन सर्वश्रोत्रमयत्वं शब्दच्छलेन सूचितं करुणाक्रन्दश्रवणा-र्थम्। इतश्चाकर्णय। मद्दया साम्बं प्रति करुणानिमित्तमनुग्रहाद्वा। क्षिप्रं शीघ्रम्। मत्तः प्रवर्तमानं महावने व्याघ्रादिगृहीतबालस्त्रीणां रोदनवत् करु-णाजनकं वचनमित्यर्थः। एवं योजना। हे भगवन्! मत्तः करुणाक्रन्दमाक-र्णय। अत्र हेतुः— सर्वश्रुतिमयतया अनेकश्रोत्रमयत्वात्। यस्यैकमेव श्रोत्रं सोऽपि करुणाक्रन्दं शृणोति। भगवांस्तु सर्वश्रोत्रमयो दयापरश्च। तस्मादित्यर्थः सर्वप्राणिनां करुणापात्रत्वाद् वेदरूपत्वाच्चोत्तमोत्तमो भगवा-निति स्तुतिः। 'यावद्देहं जरयती'त्यतः प्राक्तना श्लोकाः स्तुतिरूपाः, तत आरभ्य एतत्पर्यन्ता दुःखनिवेदका इति केचित्॥ ४२॥

इदानीं स्तुतिमेवारभते —

नाशं नास्मच्चरणशरणा यान्त्यपि ग्रस्यमाना
देवैरित्थं सितमिव यशो दर्शयंस्त्वं त्रिलोक्याम् ।
मन्ये सोमं क्षततनुममागर्भवृद्धया विवस्वन्
च्छुक्लच्छायां नयसि शनकैः स्वां सुषुम्नांशुभासा ॥ ४३ ॥

नाशं प्रध्वंसम् । अस्मच्चरणशरणाः अस्माकं पादसेवकाः । न यान्ति (न) गच्छन्ति । अपितु ग्रस्यमाना भक्ष्यमाणाः देवैः समर्थैरपि । भक्ष्यमाणा नाशं न यान्तीति सम्बन्धः । इत्थम् ईदृशम् एवंविधम् । अतएव सितमतिधवलं प्रख्यातम् । यशः ख्यातिः (तां ? तद्) दर्शयन् प्रकाशयन् । त्वमादित्यः । त्रिलोक्यां चतुर्दशभुवनेष्वित्यर्थः । को हेतुरत्राह — मन्ये कल्पयामि । सोमं कर्मापूर्वं चन्द्रम् । क्षततनुं क्षीणदेहम् । अमागर्भवृद्धया पूर्वपक्षप्रतिपदमारभ्य पौर्णमासीपर्यन्तवृद्धया । अपरपक्षे देवादिभिर्भक्ष्यते सोम इत्युक्तम् । तस्यामानामादित्यस्य मध्यवर्ती रश्मिः सुषुम्नागतः । तदुक्तं—'सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' इत्यादौ । तेन तत्र प्रविष्टं गर्भीभूतं सोमम् अतीन्द्रियमाहात्म्यनिमित्तम् । वर्धयसि । कथमिव । हे विवस्वन्! स्वां स्वस्य चन्द्रस्योचितां शुक्लच्छायां भास्वराकारां सम्पूर्णचन्द्रलक्षणाम् । विरि[1]क्तपेयादिक्रमवदापन्नस्य चन्द्रस्य क्षिप्रं वर्धनेन क्लेशो भवति । उपोषितस्य स्थूलान्नभक्षण इव क्लेशः तन्निवृत्त्यर्थं स्वां चन्द्रस्यासाधारणां शुक्लच्छायां धवलवर्णतां नयसि प्रापयसि । सुषुम्नांशुभासा सुषुम्नायां वर्तमानोऽशुरादित्यरश्मिः तस्य भासा तेजसा नयसीत्यन्वयः । भगवतः सर्वजगत्पोषणम् आश्रितवात्सल्यं च महदिति स्तुतिः ॥ ४३ ॥

इदानीमप्ययत्नेन मन्दानां मोक्षाय सूर्याकृष्टिं नाम धर्ममागमे प्रसिद्धं दर्शयति—

आस्तां जन्मप्रभृति भगवत्सेवनं तद्धि लोके
वाच्यं केनापरिमितफलं भुक्तिमुक्तिप्रकारम् ।
ज्योतिर्मात्रस्मृतिपथमितो जीवितान्तेऽपि भास्वन्!
निर्वाणाय प्रभवसि सतां तेन ते कः समोऽन्यः ॥ ४४ ॥

---

१. 'दितस्य पेयादि' क. ख. पाठः.

जन्मप्रभृति वर्णाश्रमाद्यनुष्ठानेन भगवत्सेवया यत् फलं तदास्तां तिष्ठतु । वैदिकधर्मस्यादित्य एव सर्वरूपेणापि फलदातेति शास्त्रसिद्धत्वात् । किञ्च तत् फलं लोके प्रमाणभूमौ न वाच्यम् इदमित्थमिति न प्रतिपाद्यते । केनापि पुरुषेण । न केनापीत्याक्षेपः । अत्र हेतुः अपरिमितफलम् । परिमितं परिच्छिन्नं स्वर्गादि तद् न भवतीत्यपरिमितम् । अनन्तफलमित्यर्थः । विवृणोति—भुक्तिः सर्वत्र भोगः । मुक्तिरविद्यानिवृत्तिः । तयोः प्रकारम् । येन प्रकारेण तौ लभ्येते तद् वक्तुमशक्यमिति । मनुष्यैः स्मर्तुमशक्यमिति भावः । अन्यस्तु धर्मोऽस्ति मूढानामपि शक्यः सूर्याकृष्टिर्नाम । ज्योतिर्मात्रेणादित्यस्य स्मरणं विना । मण्डलं चक्षुषा निरीक्ष्य मनसा ध्यात्वा प्रातःकालमारभ्यापराह्णे सन्ध्यापर्यन्तं यथाशक्ति निरन्तरं ज्योतिर्मात्रस्मृतिः सूर्याकृष्टिः । तस्य पन्थानं मार्गं विषयभावम् । (इतः) गतः । अत्रापि विशेषमाह —जीवितान्तेऽपि पूर्वमभ्यासं विनापि मरणकाले चिन्तनात् । हे भास्वन्! निर्वाणाय तेषां मोक्षाय प्रभवसि । तत्सामग्रीत्वेन प्रभवसि तिष्ठसि । सतां शान्तानाम् । तेन कारणेनेत्यर्थः । ते तव । कः समस्तुल्यः । अन्यः त्वत्तो ह्यन्यः । त्वया समोऽपि न । अधिकः किं पुनः । तस्माद् भगवत आदित्यस्याश्रितवात्सल्यं महत्तममिति विद्यमानगुणकीर्तनं स्तुतिः ॥

ननु मोक्षहेतुत्वं भगवतो वदन्ति 'आरोग्यं भास्करादिच्छेदि'ति रोगनिवृत्तिरादित्यसेवाफलं कैश्चिदुच्यत इति चेन्नैष दोषः । अविरोधादित्याह —

ये चारोग्यं दिशति भगवान् सेवितोऽप्येवमाहु-
स्ते तत्त्वाज्ञ जगति सुभगा भोगयोगप्रधानाः ।
भुक्तेर्मुक्तेरपि च जगतां यच्च मूलं सुखानां
तस्यान्योऽर्कादमृतवपुषः को हि नामास्ति दाता ॥ ४५ ॥

ये च मुनय इत्यर्थः । आरोग्यं रोगशान्तिम् । दिशति ददाति । भगवानादित्यः । सेवितः येन केन[2] प्रकारेणोपासितः । केचिन्मतसूचकोऽपिशब्दः । एवमाहुः वदन्ति । तेऽपि तत्त्वज्ञाः यथार्थवेत्तारः । जगति लोकानां मध्ये । सुभगा भाग्यवन्तः । अथवा श्रीमन्तः । भोगयोगप्रधानाः भोगे देहरक्षायां तेन योगे योगबले च प्रधानाः तात्पर्यवन्तः । देहदार्ढ्यं विना योगो

१. 'त्यविशेषणस्म' क. ख. पाठः. २. 'नापि प्र' ग. पाठः.

न सिध्यतीति भावः । आरोग्यस्तुतिमाहुः — भुक्तेर्मुक्तेरपिच जगतामिति । शरीरपाटवे सत्येव भोगो भवति, न शूलादिग्रस्तस्य विषयभोगः । मुक्ते-र्मोक्षस्य च साधनानुष्ठानं च लभ्यते । तस्मान्मूलं सुखानां कारणमारोग्यम् । तस्यारोग्यस्येत्यर्थः । अर्कादन्यः आदित्यादन्यः । को हि दाता, न को-ऽप्यन्यो दातेत्यर्थः । अत्र हेतुः अमृतवपुषः । अमृतं देवान्नं तदेव वपुः सूक्ष्मं शरीरं यस्य स तथोक्तः । पूर्वमुक्तं च यस्मिन् सोम इत्यादिना । को हि नाम । प्रसिद्धमेतदित्यर्थः । सर्वप्राणिभोगसाधनममृतं चन्द्रः । स आदित्यस्वरूपः । तथा सर्वप्राणिनां मोक्षरूपो नित्यानन्दोऽमृतम् । तद-प्यादित्यस्वरूपमिति विद्यमानगुणकीर्तनं स्तुतिः ॥ ४५ ॥

मोक्षप्रसङ्गेन तस्य साधनं वैराग्यं याचते —

हित्वाहित्वा गुरुचपलतामप्यनेकान् निजार्थान्
यैरेकार्थीकृतमिव भवत्सेवनं मत्प्रियार्थम् ।
तेषामिच्छाम्युपकृतिमहं स्वेन्द्रियाणां प्रियाणा-
मादौ तस्मान्मम दिनपते ! देहि तेभ्यः प्रसादम् ॥ ४६ ॥

हित्वा हित्वेति वीप्सा । परित्यज्य । किम् । गुरुचपलतां दृढतरविषय-श्रद्धाम् । इन्द्रियाणां स्वभावतो विषयेषु चापल्यं सर्वेषां स्वानुभवसिद्धम् । तस्य गुरुत्वमतिबलवद्भारतुल्यत्वम् । अपि अनेकान् शब्दादयोऽप्यनेकाः षड्जादिभेदेन । तान् हित्वा स्वरूपतः । यैः चक्षुरादिभिः । एकार्थीकृतमिव । सर्वकरणानामेको विषयः एकार्थीभावोऽपूर्व आपादित इव । अशक्तिसूचक इवशब्दः । भवत्सेवनं भगवदाश्रयणम् । मत्प्रियार्थं साम्बस्य सन्तोषार्थम् । स्वतः श्रद्धा नास्ति करणानामतो बलाद् वशीकर्तव्यमित्यर्थः । तेषां करणा-नामित्यर्थः । इच्छाम्युपकृतिमहं प्रत्युपकारमिच्छामि । किञ्च मम स्वभूतानि करणानि भृत्यवद् वर्तन्ते अतोऽप्युपकृतिमिच्छामि । कदाचित् प्रियत्वेन वर्तन्ते, तेनापीच्छामीत्याह — प्रियाणामिति । मयि सङ्गवताम् । यस्मादेवं, तस्मात् । आदौ मम अनुग्रहात् पूर्वमित्यर्थः । हे दिनपते ! देहि प्रसादं शुद्धिवैराग्यं तेभ्यः करणेभ्य इत्यर्थः । करणेभ्यः सात्त्विकवैराग्यं दातव्य-मित्यर्थः ॥ ४६ ॥

एवं चेत् तव किं तर्हि दातव्यमिति तत्राह—

अप्रत्यक्षत्रिदशभजनाद् यत् परोक्षं फलं तत्
पुंसां युक्तं भवति हि समं कारणेनैव कार्यम् ।
प्रत्यक्षस्त्वं सकलजगतां तत् समक्षं फलं मे
युष्मद्भक्तेः समुचितमतस्तच्च याचे यथात्वम् ॥ ४७ ॥

युष्मद्भक्तेः समुचितं प्रत्यक्षफलमिति प्रतिज्ञा । अत्र हेतुः—अप्रत्यक्षाः परोक्षास्त्रिदशाः ब्रह्मादिदेवाः, तेषां भजनात् सेवातः यत् फलं तत् परोक्षं व्यवहितं स्वर्गादिवत् । पुंसां भजनशीलानाम् । युक्तम् उपपन्नम् । कुतः । भवति हि समं तुल्यमेकजातीयम् । सुवर्णस्य कार्यमपि सुवर्णमेव, कारणेन कार्यस्य साम्यदर्शनात् । तर्ह्यादित्येनापि देवत्वात् पारोक्ष्यं फलं दातव्य-मिति, तन्न । न्यायाविरोधादित्याह — प्रत्यक्षस्त्वं सर्वप्राणिनामव्यवहितः चक्षुर्वेद्यः । तत् तस्मात् । व्याप्तिनियमादित्यर्थः । समक्षम् अपरोक्षम् । फल-मप्रतिबद्धमात्मज्ञानं जीवन्मुक्तिलक्षणं ब्रह्माभेदरूपमिति भावः । मे भक्तस्य । युष्मद्भक्तेरपरोक्षायाः । समुचितं न्यायप्राप्तं यस्मात् । अतः तच्च कैवल्यम् । याचे प्रार्थयामि । यथात्वं यथार्थत्वम् । मनुष्योऽहमित्ययथार्थत्वेन भ्रान्ताः सर्वे लोकाः । तत्परित्यागेन यथार्थत्वं ब्रह्मभावं याच इति सम्बन्धः । त्वं यथेति योजने पुनरुक्तिः ॥ ४७ ॥

एवं फलपर्यन्तं स्तुत्या भगवतो मोक्षहेतुत्वेन गुणो दर्शितः । इदानीं स्तोत्रमुपसं-हरति—

किं त्वन्नामोच्चरति वचनं यस्य नोच्चारकस्त्वं
किं वा वाच्यं सकलवचसां विश्वमूर्ते! न यस्त्वम् ।
तस्मादुक्तं यदपि तदपि त्वन्नुतौ भक्तियोगा-
दस्माभिस्तद् भवतु भगवंस्त्वत्प्रसादेन धन्यम् ॥

मायामयं यद् भगवद्रूपं तदपि स्तोतुं पुरुषस्य स्वातन्त्र्यं न विद्यत इति प्रथमपादेन प्रतिपाद्यते । द्वितीयपादेन वास्तवमिति मुख्यवृत्त्या स्तोतुं न शक्यत इति च । किंशब्द आक्षेपे । त्वन्नाम भगवतो नाम, भगवद्गुण-वाचकं वचनमित्यर्थः । प्रसिद्धमिति वा नामशब्दार्थः । उच्चरति उदाहरति ।

वचनं स्तुतिवाक्यम् । किमपि वचनं भगवद्गुणकीर्तनसमर्थं नास्तीत्याक्षेपः । अत्र हेतुः यस्य स्तुतिवचनस्येत्यर्थः । नोच्चारकः उदाहर्ता न भव(ति ? सि) त्वमादित्य इत्यर्थः । अयं भावः— यद् वाक्यं भगवता नोच्चारितं तन्नास्ति, सर्वत्र सर्वदा जीवरूपेण क्रीडया प्रविश्य सर्वशब्दानामुच्चारको भगवान् । तस्माद् भगवतानुक्तशब्दाभावात् तेन तु स्तुतावनुवादप्रसङ्गादन्यस्य स्तोत्रस्य स्तोतुर्वा स्तुत्यस्य वा अभावादस्वातन्त्र्यान्न किमपि वचनं तव स्तोत्रं कर्तुं शक्तमिति । इतश्च मुख्यवृत्त्या भगवतः स्तुतिरशक्येत्याह — किं वा । आक्षेपे किंशब्दः । भगवत्स्वरूपे मुख्यवृत्त्या किं वा वाच्यं न किमपि वाच्यमित्यर्थः । अत्र हेतुः—सकलवचसां लौकिकवैदिकवाक्यानामित्यर्थः । षष्ठीगुणक्रियाजातिरूढीनां यत्र यस्मिन् वस्तुनि सम्भावना तत्र शब्दानां (अ ? )वाच्यमस्ति । भगवत्स्वरूपे न षष्ठी नृपहय इतिवत् स्वस्वामिसम्बन्धाभावात् । नापि गुणः शुक्लपट इति, निर्गुणत्वात् । न पाचकशब्दवत् निष्क्रियत्वात् । न जातिः गोशब्दवत् अद्वितीयत्वात् जातेरभावान्न रूढिः । मानान्तरावेद्यत्वात् । तस्मात् त्वयि सकलवचसां वाच्यं किं न किमपीत्यर्थः । भगवत्स्वरूपस्य वाच्यादन्यत्वे वाच्यस्यान्यत्वप्रसङ्ग इति । नेत्याह । हे विश्वमूर्ते ! । विश्वं सर्वं स्थूलं सूक्ष्मं च मायया मूर्तिः शरीरं यस्य स विश्वमूर्तिः । तस्मान्नाद्वैतविरोध इत्यर्थः । यस्त्वं निर्गुणः सकलवचसां गोचरे न वर्तसे । तस्मिंस्त्वयि किं वाच्यमिति योजना । यस्मादेवं तस्मादुक्तं मया यत् स्तोत्ररूपमुक्तम् । यदपि तदपि यत्किञ्चित् शोभनमशोभनं वा । त्वन्नुतौ तव स्तोत्रमुद्दिश्य । भक्तियोगाद् भक्तिसम्बन्धमात्रेण । अस्माभिः । तत् सर्वं भवतु । हे भगवन् ! तव प्रसादादनुग्रहात् । धन्यं शोभनं पुरुषार्थसाधनं भवतु । भगवतो निरतिशयैश्वर्यान्मुख्यवृत्त्या स्तोतुमशक्यत्वात् स्तुतिरशक्येति गुणकीर्तनं स्तुतिः ॥ ४८ ॥

इदानीं स्तोत्रस्य फलं प्रार्थयते --

या पन्थानं दिशति शिशिराद्युत्तरं देवयानं
या वा कृष्णं पितृपथमथो दक्षिणं प्रावृडाद्यम् ।
ताभ्यामन्या विषुवदभिजिन्मध्यमावृत्तिशून्या
धन्या कापि प्रकृतिपुरुषावन्तरा मेऽस्तु वृत्तिः ॥ ४९ ॥

---

१. 'कारश' ग. पाठः.

या वृत्तिरिति सम्बन्धः । पन्थानं मार्गम् । देवयानं दिशति ददाति । शिशिरादि शिशिरऋतुः । तमारभ्यादित्य उत्तरतो गच्छति । तदिहोक्तम् उत्तरमुत्तरायणमित्यर्थः । देवयानं देवान् ब्रह्मलोकस्थानुद्दिश्य यातीति देवयानम् "अग्निर्ज्योतिरहः शुक्लः" इत्यादौ प्रसिद्धम् । पितृयाणं या वा कृष्णं तमःप्रधानत्वात् कृष्णमित्युच्यते अज्ञानिभिर्गन्तव्यत्वाच्च । पितृपथं पितृलोकमुद्दिश्य गच्छतां मार्गं, "धूमो रात्रिस्तथा कृष्ण" इत्यादिवाक्यसिद्धम् । अथो इति निपातः पादपूरणार्थः । दक्षिणं दक्षिणायनशब्दवाच्यम् । प्रावृडाद्यं वर्षाऋतुः प्रावृट् । तत्कालमारभ्य दक्षिणायनं पठ्यते । आदिशब्देन 'धूमो रात्रि'रित्यादिमार्गपर्वाणि विवक्षितानि । ताभ्यामुभाभ्यामन्या विलक्षणा वृत्तिर्वर्तनम् । विषुवदभिजिन्मध्यमा विषुवदिति द्वयोर्मध्यमो मोक्षमार्गः सुषुम्नाद्वारा प्रवर्तमानः । अभिजिदिति सुषुम्नामध्यस्थो मुहूर्त उच्यते । अत्र सद्योमुक्तिः प्रतिपाद्यत इति केचिद् वदन्ति । तत्र मोक्षस्य द्वारत्वेन विषुवदभिजितोर्निर्देश इति वदन्ति । ब्रह्मप्राप्तिकाले अन्तःकरणवृत्तेर्विषुवदभिजितोर्मध्यवर्तित्वस्य सिद्धत्वात् तेन सहनिर्देशः । ननु गतिर्ब्रह्मप्राप्तौ । गतेरभावाद् 'ब्रह्मैव सन् ब्रह्माप्येती'त्यादिश्रुतेः । अथवा गतिरहितो मोक्षः पूर्वमुक्तः अग्नीषोमाविति श्लोकयोः । इह तु क्रममुक्तिः प्रतिपाद्यते । योगिनां सुषुम्नाद्वारा विष्णुलोकप्राप्तेमार्गाभिधानात् । आवृत्तिशून्या पुनरावृत्तिरहिता क्रममुक्तिरूपत्वेन धन्या सुखरूपा कापि अव्यवहार्या । प्रकृतिपुरुषावन्तरा प्रकृतिपुरुषशब्दाभ्यां चिदचिद्रूपमव्याकृतं कथ्यते । तयोरन्तरा मध्यवर्ती । अधिष्ठानं निर्गुणं ब्रह्म प्रत्यग्रूपत्वाद् व्यवहारकालेऽन्तरिव भवति । यथा सर्पधारादीनामन्तर्भूता रज्जुः, एवं तुरीयं जगन्मध्यवर्ति ब्रह्म तत्प्राप्तिलक्षणा वृत्तिर्भवतु क्रमेण । मे साम्बस्य । एवं फलं भवत्वित्याशीः ॥ ४९ ॥

इदानीमष्टाङ्गयोगिनां प्राणायामादिशीलानां मोक्षप्रकारं दर्शयति — स्थित्वा किञ्चिदिति । अथवा पूर्वस्य प्रपञ्चः—

स्थित्वा किञ्चिन्मन इव पिबन् सेतुबन्धस्य मध्ये
प्राप्योपेयं ध्रुवपथमथो व्यक्तमुद्घाट्य तालु ।
सत्यादूर्ध्वं किमपि परमं व्योम सोमाग्निशून्यं
गच्छेयं त्वां सुरपितृगती चान्तरा ब्रह्मभूतः ॥ ५० ॥

---

१. 'धी' ग. पाठः.

अयमर्थः — स्थित्वा किञ्चिदिति । मूलाधारमारभ्य धारणया पृथिवीं जित्वा पुनरपां स्थाने स्वाधिष्ठाने तोयं जित्वा पुनरग्निस्थाने मणिपूरके वह्निं जित्वा पुनर्वायुस्थाने विशुद्धिसंज्ञिते हृदये धारणया वायुं जित्वा पुनराकाशस्थाने कण्ठप्रदेशे अनाहतसंज्ञके धारणया आकाशं जित्वा पुनर्भ्रूमध्ये मूलकारणमाज्ञया वशीकृत्य स्थिते उत्क्रमणकाले शीघ्रमनेन क्रमेण गत्वा । सेतुबन्धमिति भ्रुवोर्मध्यमित्यर्थः । तत्र किञ्चित्स्थिरत्वेन किञ्चित्कालं स्थित्वा । तत्र प्रयत्नबाहुल्यं सूचितं । पर्वभेदेन उत्क्रमणकाले मनः वृत्तिरूपमपि पिबन्निव । वशीकृतस्य मनसो वस्तुनिरूपणवृत्तीनां नाशात् वीतमिव नष्टमिव न तु नष्टमिति भावः । सेतुबन्धस्य सेतुवत्सेतुः भ्रुवोर्मध्यं तस्य मध्य इत्यर्थः । प्राप्य गत्वा । उपेयं फलरूपं ब्रह्म । विशेषेण तत्रस्थं ध्रुवपथमिति ज्योतिःशास्त्रे प्रसिद्धम् । ध्रुवस्य मार्गः । तदपि ब्रह्मलोकं गच्छतां द्वारभूतमित्यर्थः । अथो अनन्तरं व्यक्तं प्रत्यक्षयोग्यं मांसखण्डं मुखविदारणे द्रष्टुं शक्यम् । 'अन्तरेण तालुके य एष स्तन इवावलम्बते' इति श्रुतिसिद्धम् । उद्घाल्य भित्त्वा योगबलेन । तालु तालुकयोर्मध्यवर्ति मांसखण्डं तालुशब्देन निर्दिष्टम् । सत्यात् सत्यलोकात् द्वादशान्तशब्दवाच्यात् । ऊर्ध्वमुपरि । अथवा द्वादशान्ते विशेषेण स्थितं सर्वगतमपि ब्रह्म शुद्धस्थाने प्रसन्नमिति निरूढम्, इतः प्राप्तुं च योग्यमिति सत्यादूर्ध्वमित्युच्यते न तु परिच्छिन्नत्वात् । किमपि वाङ्मनसयोरपि न विषयम् । परममुत्कृष्टमानन्दरूपम् । व्योम आकाशवदाकाशम् । सर्वविशेषशून्यं 'पृच्छामि त्वा परं व्योम' इत्यादिश्रुतिसिद्धं शैवागमे च सिद्धम् । सोमाग्निशून्यं शीतोष्णादिसर्वद्वन्द्वरहितमित्यर्थः । त्वां ब्रह्मीभूतं गच्छेयं प्रापयेयमिति सम्बन्धः । सुरपितृगती चान्तरा देवयानपितृयाणयोरन्तरा मध्यवर्ति । ताभ्यां संसाररूपाभ्याम् अस्पृष्टत्वेनावस्थितं परमं व्योम । तत्प्राप्तौ फलमाह — ब्रह्मभूतः तद् भवामि । अथवा प्राप्तौ हेतुमाह — सर्वदा ब्रह्मभूतो जीवः । तत्त्वतः उपाधिनिमित्तो भेदप्रतिभासः । तं परित्यज्य स्थितिः गच्छेयमित्युच्यते उपचारतः । मूलाधारादिक्रमेण गत्वा व्यक्तं तालु उद्घाल्य ध्रुवपथं प्राप्य सेतुबन्धस्य मध्ये किञ्चित् स्थित्वा मनः पिबन्निवाथो उपेयं सत्यादूर्ध्वं किमपि परमं व्योम सोमाग्निशून्यं सुरपितृगती चान्तरा उपेयं ब्रह्मभूतो गच्छेयमिति योजना । मोक्षरूपं इति गुणकीर्तनं स्तुतिः ॥ ५० ॥

१. 'स्थि' ग. पाठः. २. 'ध्यम् इ', ३. 'पचितुं प्रा' क. ख. पाठः. ४. 'पशु' ग. पाठः.

स्तुतिफलमाह —

भक्तिश्रद्धाद्यखिलतरुणीवल्लभेनेदमुक्तं
श्रीसाम्बेन प्रकटगहनं स्तोत्रमध्यात्मगर्भम् ।
यः सावित्रं पठति नियतं स्वात्मवत् सर्वलोकान्
पश्यन् सोऽन्ते व्रजति शुकवन्मण्डलं चण्डरश्मेः ॥ ५१ ॥

भक्तिर्भजनं सेवास्नेहबहुमानविश्वासादिजन्यम् । श्रद्धा आस्तिक्यबुद्धिः । आदिशब्देन करुणाद्या गुणा निर्दिष्टाः । तासां स्त्रीविग्रहत्वात् तरुण्यः । तासामाश्रयत्वाद् वल्लभः पतिः साम्बः । तेनोक्तं रचितम् । प्रकटगहनं प्रसन्नगम्भीरम् । स्तोत्रं स्तुतिम् । अध्यात्मगर्भम् अध्यात्मं ब्रह्मज्ञानं तद्गर्भीभूतं निरूपिते व्यक्तं भवति यस्मिंस्तत् तथोक्तम् । अथवा साङ्ख्ययोगवेदान्ताः अध्यात्मरूपास्तेषां सारः गर्भः यस्मिन् तत् तथोक्तम् । यः पुरुषः सावित्रं सवितृविषयं नियतं पठति सः स्वात्मवत् स्वशरीरवत् सर्वलोकान् ब्रह्मादिस्तम्बपर्यन्तान् पश्यन् प्रमाणेनानुभवेन च निश्चिन्वन् । आत्मा ईश्वर इति निश्चयोऽपि स्तोत्रजपादिनिमित्तं भवति स कर्तव्य इति भावः । सः आत्मनिश्चयवान् । अन्ते मरणकाले व्रजति प्राप्नोति । शुकवद् व्यासपुत्रवत् । शुक आदित्यमण्डलं गत इति मोक्षधर्मे सिद्धम् । मण्डलं भगवत्स्वरूपम् । चण्डाः पापनिवर्तका रश्मयो यस्य स चण्डरश्मिः परमात्मा । तं प्राप्नोतीत्यर्थः ॥ ५१ ॥

सूतः पुराणवक्ता स्तुतिकथां निगमयति —

सर्वात्मत्वं सवितुरिति यो वाङ्मनःकायबुद्ध्या
रागद्वेषोपरमसमतायोगमेवारुरुक्षुः ।
धर्माधर्मग्रथनरशनामुक्तये युक्तियुक्तां
स श्रीसाम्बः स्तुतिमिति रवेः सुप्रतिष्ठां चकार ॥ ५२ ॥

सर्वात्मत्वं सर्वप्राणिनां प्रत्यगात्मत्वम् । यथा सर्वप्राणिनां प्रत्यगात्मत्वं तथा सर्वप्राणिनां सर्वशरीररूपत्वं च । सवितुः प्राणिप्रसवहेतोः । उपादानं निमित्तं साक्षी च भगवानेव सर्वत्रेत्यर्थः । इतिशब्दो हेतौ । यस्मात् सर्वात्मकत्वं भगवतः तस्मात् । यः साम्बः । वाङ्मनःकाय-

बुद्ध्या रागद्वेषयोरुपरमः विनाशः । सर्वं भगवानेवेति ज्ञाते हस्तपादादिवत् सर्वजन्तूनां जीवस्य स्वरूपत्वाद् विषयाभावाद् रागद्वेषौ न सम्भवतः, स एव समतायोगः । तमारुरुक्षुः आरोढुमिच्छुः । धर्माधर्मौ सूक्ष्मरूपौ तौ ग्रथनवद् रज्जुवत् पुरुषस्य बन्धहेतुत्वात् ग्रथने । एवंविधरशनामुक्ति-र्मोक्षः तस्मै । अत्रहेतुः — युक्तियुक्तामिति । युक्तियोगः तेन सहिताम् । साङ्ख्यपक्षे तु युक्तिः प्रमाणं अविद्यानिवृत्तिः फलं तेन युक्ताम् । योगपक्षे युक्तिशब्दो योगविषयः । सः श्रीसाम्बः एवं रूपां रवेः स्तुतिं भगवद्रूपस्तुतिं सुप्रतिष्ठां लोकानुग्रहकारणभूतां प्रतिष्ठामिव चकार कृतवान् । आचन्द्रता-रकमचलस्थितिं चकार ॥ ५२ ॥

श्रोतॄणां मुनीनामाशीर्वादं करोति सूतः —

इति परमरहस्यश्लोकपञ्चाशिकैषा
तपननमनपुण्या सागमब्रह्मचर्चा ।
हरतु दुरितमस्मद्वर्णनाकर्णिता वो
दिशतु च शुभदृष्टिं मातृवद् भक्तिभाजाम् ॥ ५३ ॥

इतिशब्दः प्रकारवाची । परमरहस्यं ब्रह्म तत्प्रतिपादकत्वात् स्तोत्रमपि परमरहस्यं शुद्धिसाधनम् । श्लोकानां सङ्ख्यामाह — पञ्चाशिका पञ्चाशत्स-ङ्ख्यासम्बद्धा पञ्चाशिका । एषा स्तुतिः । तपनः सविता तस्य नमनेन नम-स्कारेण पुण्या अदृष्टहेतुः । सागमब्रह्मचर्चा आगमेन वेदान्तसाङ्ख्ययोगादि-(ना)सहिता तत्र प्रतिपादितपुरुषार्थलाभकारणमित्यर्थः । ब्रह्मचर्चा परब्रह्मणो मननरूपा । हरतु दुरितम् । अस्मद्वर्णनानिमित्तमाकर्णिता श्रुता दिशतु च ददातु । शुभदृष्टिं ब्रह्मविद्यामित्यर्थः । केषां मातृवत् सवितरि भक्तिमता-मित्यर्थः ॥ ५३ ॥

*शुकतुण्डच्छवि सवितुश्चण्डरुचः पुण्डरीकवनबन्धोः ।
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥

शुभमस्तु ।

---

* श्लोकोऽयं ग-मातृकायां न दृश्यते ।

# श्लोकानुक्रमणी ।